आधुनिक

# संस्कृत-साहित्यानुशीलनम्

## (Seminar on Modern Sanskrit Literature)

संचालकः

डॉ० रामजी उपाध्यायः, एम० ए०, डी० फिल्: डी० लिट्

संस्कृतविभागाध्यक्षः

सागरविश्वविद्यालयः, सागरम् ( म० प्र० )

विक्रमसंवत्सरः २०२२

मूल्यम् सप्त रूपकाः



—डा० ओमप्रकाश हर्ष, शिवदर्शन तिवारी, डा० हीरालाल शुक्ल, डा० रामगोपाल मिश्र, गुलाबचन्द्रजैन, महावीर प्रसाद जैन, कृष्णहरि शर्मा, विहारी लाल न
आच्युतानन्द झा, डा० गौतम प्रपाद मिश्र, पं० दयाचन्द्र जैन,

—डा० सीताराम दाँतरे, डा० रेवा प्रसाद द्विवेदी, रुद्रदेव त्रिपाठी, डा० हरीन्द्रभूषण जैन, जगन्नाथ वेदालंकार, डा० रामजी उपाध्याय, इन्दुकुमार राय,
पं० चिन्ताहरण चक्रवर्ती, डा० श्रीमती वनमाला भवालकर, डा० विश्वनाथ भट्टाचार्य, डा० प्रभाकर शास्त्री, डा० पुष्करदत्त शर्मा, श्री बसन्त अ० गाडगील

# परिसंवादस्य सद्भाविनां परिचयः

१. डा० गोविन्द त्रिगुणायतः, एम० ए०, पी० एच० डी०, डी० लिट०

आगराविश्वविद्यालयस्य संस्कृतविभागाध्यक्षः, मुरादाबादस्थ-के० जी० के० महाविद्यालये प्राध्यापकः, बहूनां समालोचना-ग्रन्थानां रचयिता, भारती-अनुसन्धान-संस्थायाः संचालकश्च ।

२. डा० श्रीधर भास्कर वर्णेकरः, एम० ए०, डी० लिट्०

नागपुरवास्तव्योऽयं संस्कृतज्ञेषु नितरां परिचितः । आधुनिक-संस्कृतसाहित्यमवलम्ब्य बृहच्छोधनिबन्धं विरच्य संस्कृतानुरागमनेन प्रादर्शि । बहूनां संस्कृतकाव्यानां रचयिता, संस्कृतपत्रिकासम्पादकः, संस्कृतप्रचारैकव्रतश्च श्रीवर्णेकरमहाशयो नागपुरविश्वविद्यालये प्राध्यापकपदमलंकरोति ।

३. डा० जी० टी० देशपाण्डे, एम० ए०, डी० लिट्०

नागपुरविश्वविद्यालये संस्कृतविभागाध्यक्षः । काव्यशास्त्र-शोधग्रन्थेन केन्द्रीयशासनस्य साहित्य-अकादमी-संस्थायाः पंचसहस्र-मुद्रात्मक-पुरस्कार-विजेता ।

४. पं० वासुदेवशास्त्री, वाराणसी

संस्कृतस्य पुनरुज्जीवनार्थं सार्वभौम-संस्कृतप्रचारकार्यालयं संस्थाप्य तद्द्वारेण सर्वत्र संस्कृतस्य प्रचारे दत्तचित्तः । बहूनां सरलसंस्कृतग्रन्थानां संस्कृतमाहात्म्यप्रतिपादकानां रचयिता, समग्रे भारते संस्कृतप्रचारार्थं कृताटनोऽयं विद्वान् नित्यं संस्कृतोन्नतिं कामयमानः निष्कामं समाचरति ।

५. प्रोफेसर चिन्ताहरण चक्रवर्ती-कलिकाता

आधुनिकसंस्कृतमवलम्ब्य शोधप्रवृत्तेः प्रथमप्रवर्तकेषु अन्यतमः । 'माडर्न रिव्यू' आदिपत्रेषु अर्वाचीनकालविरचितं संस्कृतसाहित्यमधिकृत्य बहूनां निबन्धानां रचयिता, तन्त्रशास्त्रस्य विशेषज्ञः, एशियाटिक सोसायटी-संस्कृतसाहित्यपरिषद्-वङ्गीयसाहित्यपरिषद्प्रमुखानां संस्थानां सम्मानितसदस्यः प्रवया अयं विद्वान् संस्कृतविद्वत्समाजे सुप्रसिद्धः । सम्प्रत्येव काश्यां तन्त्रसम्मेलने साभापत्यमनेन कृतम् ।

६. डा० राममूर्ति शर्मा, एम० ए०, पी० एच० डी०

मुरादाबादस्थ—के० जी० के० कालेजे प्राध्यापकः। दर्शनशास्त्रे विशेषतः कृतश्रमोऽयं विद्वान्।

७. डा० रेवाप्रसाद द्विवेदी, एम० ए०, पी० एच० डी०, साहित्याचार्यः

तरुणः संस्कृतज्ञोऽयं मध्यप्रदेशशासनसेवाधीनः नरसिंहगढ़कालेजे प्राध्यापकः। संस्कृतभाषायाः शोभनो वक्ता, उच्चाशयः, कविः, शोधनिबन्धकश्च। अदृष्टचराया हेमाद्रिकृताया रघुवंश दर्पणाख्य-टीकायाः सम्पादकः।

८. डा० रामप्रसाद वाजपेयी, एम० ए०, पी० एच० डी०

सागरविश्वविद्यालये 'संस्कृतसाहित्ये गान्धिवादस्य प्रभाव' इति विषयमवलम्ब्य शोधकर्मनिरतोऽयं परस्तात् पी० एच० डीत्युपाधिं लब्धवान्।

९. श्रीशंकरलाल स्वर्णकारः, एम० ए०

सागरविश्वविद्यालये शोधच्छात्रः। 'सप्तदशशतकस्य संस्कृतनाटक" मिति विषयमवलम्ब्य गवेषमाण आस्ते।

१०. डा० हीरालालशुक्लः, एम० ए०, पी० एच० डी०

सागरविश्वविद्यालयात् "अप्पाशास्त्रीराशिवडेकरस्य जीवनं कृतित्व" श्चेति विषयमवलम्ब्य लब्ध पी० एच० डीत्युपाधिकः रायपुर-राजकीयसंस्कृतमहाविद्यालये प्राध्यापकः।

११. रुद्रदेवत्रिपाठी, साहित्याचार्यः, सांख्ययोगदर्शनाचार्यः, काव्यतीर्थः, पुराणतीर्थः, एम० ए० (संस्कृतहिन्द्योः), साहित्यरत्नम्।

आबाल्यं संस्कृतपद्यरचनायां कुशलोऽयंविद्वान् 'मालवमयूर' इति पत्रस्य सम्पादकः। प्रायः पञ्चदशपुस्तकानां रचयितायं सम्प्रति 'संस्कृतसाहित्ये शब्दालंकार-चित्रालंकाराणां विशिष्य विमर्शः' इति विषयमवलम्ब्य शोधप्रवृत्तो मन्दसौरवास्तव्यः।

१२. विश्वनाथशर्मा शास्त्री, एम० ए०

सागरविश्वविद्यालये सहायकग्रन्थाध्यक्षः। आर्यसमाजसदस्यः, संस्कृते भृशमनुरक्तः सुलेखकश्च। सम्प्रति रायपुरविश्वविद्यालयस्य पुस्तकालयाध्यक्षः।

१३. डा० हरीन्द्रभूषण जैनः, एम० ए०, पी एच० डी० साहित्याचार्यः

विक्रमविश्वविद्यालये संस्कृतप्राध्यापकः, संस्कृतलेखकः। कालिदासस्य कृतीनां विषयेऽनुसन्धायकः।

१४. बिहारीलाल नागार्चः, एम० ए०

सागरविश्वविद्यालये शोधच्छात्रः। 'अष्टादशशतके संस्कृतनाटकस्य विकास' इति विषयमाश्रित्य गवेषणनिरतः।

१५. श्रीमती निर्मलोपाध्यायः, एम० ए०

सागरविश्वविद्यालये 'स्वातन्त्र्योत्तरकालिकं संस्कृतसाहित्यम्' इति विषयमवलम्ब्य शोधप्रवृत्ता।

१६. डा० खीताराम दाँतरे, एम० ए०, पी एच० डी०

मध्यप्रदेशशासनसेवाधीनोऽयं संस्कृतप्राध्यापकः। नीलकण्ठदीक्षितमाश्रित्य शोधनिबन्धं विरच्य गृहीतोपाधिकः।

१७. अच्युतानन्द झा, एम० ए०

सागरविश्वविद्यालये रामावतारशर्मणो जीवनं कृतित्वञ्चाश्रित्य शोधकर्मनिरतः।

१८. डा० गौतमप्रसाद मिश्रः, एम० ए०, पी एच० डी०, व्याकरणाचार्यः

सागरविश्वविद्यालये शोधच्छात्रः। पारिजातहरणकथाविषयकेण निबन्धेन लब्ध पी एच० डीत्युपाधिकः।

१९. कृष्णहरिशर्मा, व्याकरणाचार्यः

सागरविश्वविद्यालये शोधच्छात्रः।

२०. कु० अर्चना बोस, एम० ए०

छत्रपुरस्थ-महाराजा-महाविद्यालये संस्कृतप्राध्यापिका।

२१. गुलाबचन्द्र जैनः, एम० ए०

सागरविश्वविद्यालये 'विंशशतके नाटकसाहित्य' मिति विषये गवेषमाणः।

२२. डा० कन्हैया द्विवेदी, एम० ए०, पी एच० डी०

सागरविश्वविद्यालये शोधच्छात्रः। मध्यप्रदेशे संस्कृतसाहित्यस्य स्थितिरिति विषये शोधनिबन्धं विरच्य लब्धोपाधिकः।

२३. कु० मनोरमा सक्सेना, एम० ए०

सागरविश्वविद्यालये शोधकर्मप्रवृत्ता। झाँसीस्थमहिला-महाविद्यालये प्राध्यापिका च।

२४. श्री वसन्त अनन्त गाडगीलः

पूनातः शारदापाक्षिकपत्रं सम्पाद्य प्रकाशयति। संस्कृतप्रसारणव्रतोऽयं तरुणः संस्कृतस्य शोभनो वक्ता।

२५. डा० जगदीशप्रसाद मिश्रः, एम० ए०, पी एच० डी०, व्याकरणाचार्यः

मध्यप्रदेशशासनसेवाधीनः रीवाकालेजे संस्कृतप्राध्यापकः

२६. श्री शिवदर्शन तिवारी, एम० ए०

सागरविश्वविद्यालये शोधच्छात्रः।

२७. डा० प्रभाकरशास्त्री, एम० ए०, पी एच० डी, साहित्यधर्मशास्त्राचार्यः

डूंगर-कालेज-बीकानेर इत्यत्र संस्कृताध्यापकः। बहूनां संस्कृत-हिन्दीग्रन्थानां रचयिता सम्पादकश्च।

२८. श्रीजगन्नाथ वेदालंकारः

पण्डिचेरीस्थ-श्रीअरविन्दआश्रमनिवासी, श्रीअरविन्दग्रन्थानां संस्कृतानुवादकर्ता, वेदादिविद्, सुवक्ता, सुलेखकश्च।

२९. डा० पुष्करदत्तशर्मा, एम० ए०, पी एच० डी०

बीकानेरस्थ महाविद्यालये व्याख्याता, आधुनिकसंस्कृतोपन्यास-विषये शोधतत्परः।

३०. श्री सिद्धनाथशुक्लः, एम० ए०

सागरविश्वविद्यालये शोधच्छात्रः।

३१. श्री इन्दुकुमार राय, बी० ए०

श्री अरविन्दाश्रमे संस्कृतपरिषदो मन्त्री।

३२. डा० ओमूप्रकाश हर्षः एम० ए०

नरसिंहपुर राजकीयोपाधिमहाविद्यालये प्राध्यापकः।

३३. डा० रामगोपालमिश्रः, एम० ए०

सी० एम० डी० कालेज, विलासपुर-प्राध्यापकः।

३४. डा० कु० शशिबाला श्रीवास्तवः एम० ए०
संस्कृतप्राध्यापिका.........

३५. श्री किशोरीशरण त्रिपाठी एम० ए०
सागरविश्वविद्यालये शोधच्छात्रः ।

३६. कु० साधना गुप्तः एम० ए०
सागरविश्वविद्यालये शोधच्छात्रा ।

३७. श्री महावीरप्रसाद जैनः एम० ए०
सागरविश्वविद्यालये शोधच्छात्रः ।

३८. श्रीदयाचन्द्र जैनः साहित्याचार्यः, जैनदर्शनशास्त्री
सागरनगरस्थे श्रीगणेश दिगम्बर जैन संस्कृतमहाविद्यालये प्राध्यापकः ।

३९. श्रीगणेशप्रसाद त्रिपाठी
सागर वि० वि० संस्कृतविभागच्छात्रः ।

———

# सागरविश्वविद्यालयस्य प्राध्यापकाः

१. डा० रामजीउपाध्यायः, एम० ए०, डी० फिल०, डी० लिट्०
सागरविश्वविद्यालयस्य संस्कृतविभागाध्यक्षः, भारतीयसंस्कृतौ भृशमनुरक्तः, गान्धिदर्शनविशेषज्ञः, गान्धिपरिषदाध्यक्षः, पंचदशाधिक-ग्रन्थानां रचयिता, सागरिकापत्रिकायाः सम्पादकश्च ।

२. श्रीमती वनमाला भवालकरः, एम० ए० पी एच० डी०
स्वातन्त्र्योत्तरकालस्य सर्वोत्तम-मराठीनाटक-रचयितृत्वेन मध्य-प्रदेशशासन-साहित्यपरिषदो प्रथम-पुरस्कार-विजेत्री ।

३. डा० विश्वनाथ भट्टाचार्यः, एम० ए०, पी एच० डी०
नाट्यशास्त्रविशेषज्ञः

४. डा० योगेश्वर पाण्डे, एम० ए०, पी एच० डी०,
वेदाचार्य, वेदान्ताचार्य, वैदिकसाहित्ये कृतश्रमः ।

# विषय-सूची

## SANSKRIT SECTION



## HINDI SECTION

## ENGLISH SECTION



## VALEDICTORY FUNCTION

# वाङ्मुखम्

अथेदमुपायनीक्रियते विदुषां 'आधुनिकसंस्कृतसाहित्यानुशीलनं' नाम सागर-विश्वविद्यालये समायोजिते परिसंवादे गवेषकविद्वद्भिः पठितानां निबन्धानां संचयः। षोडशशतकात् समारभ्य वर्तमानकालं यावत् संस्कृते यद्विपुलं बहुविधं च साहित्यं संस्कृतसेवकैः प्रतिप्रान्तं व्यरचितत्तेषामध्यापनं समीक्षणं चाकृतप्रायम्। अथ चैतद् विना संस्कृतस्य शाश्वती धारा नैव सर्वेषां दृष्टिपथ-मायाति। न वा तस्य प्रतिशतकं युगोपयोगित्वं पुरोगामित्वं च प्रमाणपदवीम-धिरोहतीति भावनया विभागाध्यक्षस्य प्रोफेसर डॉ० रामजीउपाध्यायस्य प्रेरणया संस्कृतविभागेन समायोजितोऽयं दशाहव्यापी परिसंवादो विगते १९६५ वर्षे मई-मासस्य २१ दिनात् ३० दिनं यावत्। तत्र च नानादिग्देशात् समागत्य विद्वांसः शोधकर्त्तारश्च संस्कृतसाहित्यस्याधुनिकयुगमवलम्ब्य निबन्धान् पठितवन्तः। त एव निबन्धा इदानीं ग्रन्थाकारेण प्रकाश्यन्ते।

विश्वविद्यालयानुदानायोगेन वितीर्णं षट्सहस्ररूप्यकपरिमितं धनसाहाय्यं परिसंवादायोजने बीजायितमिति वयं तदायोगाधिकारिभ्यः साधुवादेन युञ्ज्महे। निबन्धपाठकाश्च मनोरथमस्माकं पूरितवन्त इति तेऽपि ससाधुवादमभिनन्द्यन्ते।

अत्र संकलिताः सर्वे निबन्धाः संस्कृतसाहित्यस्य बाहुल्येनोपेक्षितस्य बृहत्का-लखण्डस्य विविधाभिः प्रवृत्तिभिः संस्कृतानुरागिणां परिचयं साधयन्तः स्वतन्त्रे भारते संस्कृतस्य प्रतिष्ठां दृढतरमूलां कर्तुं प्रभविष्यन्तीति नो मतिः। युगान्तरेषु संस्कृतस्य स्थितिं सम्यग् विज्ञाय वर्तमानकालिकाः संस्कृतज्ञाः अपि संस्कृतसेवायै अधिकतरं सन्नाद्धाः स्युरित्यपि आशास्यते।

आधुनिकसंस्कृतसाहित्यानुशीलनं विदुषां हृदयेषु स्थानमादधद् संस्कृतस्य कमपि नवीनमभ्युदयं त्वरयेदिति अलम्।

| | |
|---|---|
| संस्कृतविभागः | विश्वनाथ भट्टाचार्यः |
| सागरविश्वविद्यालयः | मंत्री |
| सागरम् | परिसंवादसमितिः |

# उद्घाटन-समारम्भः

The director of the seminar, Prof. Dr. Ramji Upadhyaya, delivered the following introductory speech in the inaugural function of the Seminar on Modern Sanskrit literature held on May 21, 1965.

माननीय उपकुलपति तथा समागत विद्वद्वृन्द !

आधुनिक संस्कृत-साहित्य-सम्बन्धी परिसंवाद के शुभारम्भ के समय सर्वप्रथम मुझे विशेष रूप से इस विश्वविद्यालय के संस्थापक सर हरीसिंह गौड़ का स्मरण हो रहा है। उनके अपार विद्याप्रेम और देशभक्ति के ही कारण सागर आज विश्वविद्या का केन्द्र बना हुआ है। भारतीय संस्कृति के प्रति उनकी अपार आस्था थी और इसी लिए प्रारम्भ से ही इस विश्वविद्यालय में संस्कृत के पठनपाठन की व्यवस्था की गई। यह परम सन्तोष का विषय है कि संस्कृत-विभाग निरन्तर प्रगति करता हुआ आगे बढ़ रहा है।

संस्कृत-विभाग का शोध के क्षेत्र में विशेष महत्त्व है। आज तक लगभग बीस शोधकर्ताओं को यहाँ से पी एच० डी० की उपाधि मिल चुकी है। शोधकर्म और अध्ययन दोनों में विभाग के सभी प्राध्यापक पूर्ण रूप से संलग्न हैं। हमारे विश्वविद्यालय में संस्कृत-वाङ्मय का केवल पठन-पाठन ही नहीं किया जा रहा है, अपितु उसे नित्य संवर्धित करने की दिशा में भी सफल प्रयास किया गया है। पिछली कई शताब्दियों में संस्कृत साहित्य की क्या स्थिति थी, इसका स्वल्प ज्ञान ही हमें प्राप्त है। इस दिशा में शोध की आवश्यकता का अनुभव करते हुए आधुनिक संस्कृत-साहित्य-सम्बन्धी अनुसन्धान में हम प्रवृत्त हुए हैं।

संस्कृत भाषा मर चुकी है—इस मिथ्यारोप का निराकरण करने का भार हम संस्कृतज्ञों पर है। इस युग के असंख्य कवि और लेखकों के विषय में हम पूर्णतया उदासीन हैं। यह स्थिति संस्कृत के अभ्युदय

के लिए उपयुक्त नहीं है। इसी भावना से आधुनिक संस्कृत-साहित्य की व्यापक महत्ता को प्रमाणित करने के लिए इस परिसंवाद का आयोजन किया गया है। हम विश्वविद्यालय-अनुदान-आयोग के आभारी हैं, जिसने आर्थिक सहायता देकर इस योजना को सफल बनाने की व्यवस्था की है।

हमारे उपकुलपति संस्कृत-विभाग के प्रति विशेष स्नेह रखते हैं। उनकी प्रेरणा और उत्साह सदा के लिए हमारे साथ रहे। कृतज्ञता के साथ हम उनका आभार मानते हैं। सभी समागत विद्वान् अतिथियों का स्वागत करते हुए हम माननीय उपकुलपति से स्वागतभाषण के लिए प्रार्थना करते हैं।

After this the Vice-Chancellor delivered his address of welcome. While expressing his special regard for Sanskrit learning and the Department of Sanskrit, he said that it was only from Sanskrit literature, the store-house of our noblest ideals, that India could find the right inspiration to march forward.

He expressed the hope that the contributions of the seminar would be fruitful in a deeper understanding of our past and present.

After the speech of the Vice-Chancellor, Ku. Archana Bose sang a prayer to Goddess Sarasvatī soliciting her grace for the success of the seminar.

Then Prof. Dr. G. S. Trigunayat delivered his inaugural address.

---

# उद्घाटनोपायनम्

गोविन्दः त्रिगुणायतः

श्रीमन्तः सम्माननीया उपकुलपतिमहोदयाः समुपस्थिता विद्वांसो महानुभावाश्च !

अस्तीदं परमं सौभाग्यं यद् अद्याहमत्रभवतां लोकविश्रुते नगरे आधुनिकसंस्कृतसाहित्यसम्बन्धिन्याः संगोष्ठयाः समुद्घाटनाय समुपस्थितोऽस्मि । कस्मैचन वरिष्ठाय विशिष्टविदुष एवेयं प्रतिष्ठा प्रदेया आसीदिति मे सुदृढा धारणा । संस्कृतानुरागित्वेन सम्मानार्हमेतादृशं पदमारोढुं नैव क्षमतामर्हति मादृशो जनः ।

न विस्मरणीयमिदं तथ्यं भवद्भिः यत् संस्कृतमेव संस्कृतेः शरीरम् । "शरीरमाद्यं खलु धर्मसाधनम्" इति सिद्धान्तानुसारेण संस्कृतस्य स्वरूपरक्षा, तस्य प्रयोगः, प्रचारः, विदेशेषु तस्य वैशिष्ट्यव्यवस्थापनञ्चास्माभिः सर्वथा कर्तव्यम् । स्वसंस्कृत्यनुसरणेनैव अस्माकं राष्ट्रस्य समुन्नतिः सम्भाव्यते । कस्यचिदन्यस्य देशस्य संस्कृतेः विकासार्थ—कृतः प्रयत्नः क्षीरे जलमिश्रणवत् हेयोऽस्ति । परसंस्कृत्यनुसृतिः केनापि प्रकारेण कल्याणकारिणी भवितुं नार्हति । अतः स्वसंस्कृतेः स्वरूपज्ञानं तदाचरणञ्च सर्वथा आवश्यकम् । संस्कृतेः स्वरूपज्ञानाय संस्कृताध्ययनं सर्वथा अपेक्षणीयमस्ति ।

पाश्चात्याः प्राच्या अपि अनेके युवानः संस्कृतं मृतमिति यदा कदा उद्घोषयन्ति । तेषां मते पाणिनेः प्रागेव संस्कृतस्य मृत्युः संजातः । हास्यास्पदमिदं तेषां मतम् ।

मृतायामपि च संस्कृतभाषायां तस्यामेव विश्वस्य समृद्धतमस्य साहित्यस्य सर्जनं कथं समभवदिति न ते विचारयन्ति मूढधियः । अस्ति च प्रतीपा स्थितिः । न मृतं संस्कृतं कदापि । मृतास्तु वयं ये स्वमातरमपि न समाद्रियन्ते ।

अस्माकं देशे स्वातंत्र्यं नाममात्रमेव दृश्यते । युग-युगपर्यन्तं परानुसरणात् मृतः अस्माकमात्मा । अतएव वयं स्वजनन्या गीर्वाण्या

अभ्युदयाय न तथा प्रयतामहे, यथा आङ्गलभाषायाः प्रसाराय प्रचाराय च प्रवर्तामहे। संस्कृतस्यैव प्रवर्धनेन अस्माकं समुन्नतिः सम्भाव्यते उक्तिरियं मे न अत्युक्तिः।

सर्वेऽपि संस्कृतानुरागिणो वयं भारतसर्वकारस्य अत्यन्तं कृतज्ञाः, येन संस्कृतशिक्षायाः समुन्नतये महान् हि क्रियात्मकः प्रयासः समारब्धः। तस्य प्रेरणया विभिन्नप्रान्तेषु विविधा संस्कृतविश्वविद्यालयाः पाठशालाश्च संस्थापिताः। विविधानि च प्राच्यविद्यानुसंधानकेन्द्राण्यपि समारोपितानि संस्कृतशिक्षाविकासार्थं विविधाः समितयोऽपि स्थापिता दृश्यन्ते। संस्कृतसाहित्यसंवर्धनाय पुरस्कारयोजनापि प्रवर्तिता। संस्कृतविदुषां साहाय्यमपि क्रियते। तथापि महदाश्चर्यमस्ति यत् संस्कृतच्छात्राणां संख्या प्रत्यहं कृष्णपक्षे चान्द्रमसी कलेव क्षीयते। छात्रा आङ्गलभाषाध्ययनमेव हितकरं मन्यन्ते। परिणामः प्रत्यक्षं दृश्यते। वाराणसेय संस्कृतविश्वविद्यालयेऽपि पंचशताधिकाः छात्रा न सन्ति। किन्नाम कारणमस्य इति मनोयोगेन विचारणीयम्।

सर्वप्रथमं तु संस्कृतज्ञानां कृते न किमपि भास्वरं भविष्यं भासते। येन केन प्रकारेण छात्राः प्रथमां श्रेणीं लब्ध्वाऽपि समुचितं पदं न प्राप्नुवन्ति। अथ च ये छात्रा आङ्गलभाषामधीत्य तृतीयश्रेण्यामपि समापतन्ति, तेऽपि परीक्षाफल-प्रकाशनात् पूर्वमेव समुचितभाग्यशालिनो भवन्ति। अतः सुस्पष्टमेव यत् संस्कृतस्य तादृशः सम्मानः गौरवञ्च न विद्येते यादृशी प्रतिष्ठा प्रतीयते आङ्गलभाषायाः। आङ्गलदासता एव अस्माकमात्मानमद्यापि शास्ति। एकमन्यत् कारणमपि उल्लेखनीयम्। सम्पूर्णभारतवर्षस्य विश्वविद्यालयेषु, महाविद्यालयेषु विद्यालयेषु च सर्वत्र आङ्गलभाषाध्ययनमेव अनिवार्यमस्ति। संस्कृतं च सर्वत्र वैकल्पिको विषयो वर्तते। छात्रवृत्तिप्रदानेन यया कयाचित् प्रेरणया कति छात्रा संस्कृताध्ययनाय उद्यता भवन्ति। अस्माकं प्रस्थापनास्ति यावत् स्नातककक्षापर्यन्तं संस्कृतमनिवार्यं न भविष्यति तावदस्य प्रतिष्ठा, प्रयोगः प्रचारश्च प्रचयं न प्राप्स्यन्ति। सर्वासु सर्वकारप्रतियोगितास्वपि समुचितं संस्कृतज्ञानमनिवार्यं स्यात्।

संस्कृतशिक्षोन्नतये संस्कृतभाषायां नवं नवं साहित्यसर्जनमावश्यकमस्ति। आधुनिके काले संस्कृतसाहित्यस्य तादृशी संवृद्धिः न दृश्यते यादृशी प्राचीनकाले अभवत्। विरचितस्य साहित्यस्य प्रथमं तु प्रकाशनं

नैव भवति। येन केन प्रकारेण प्रकाशत्वमपि याति तर्हि न कोऽपि पाठकस्तस्य उपलभ्यते। किन्नाम कारणमस्या उपेक्षाया इति विचारावसरे सुतरामेव स्पष्टीभवति यदस्मिन् विज्ञानवाणिज्यविशिष्टे कलियुगे कलाकलितं साहित्यमध्येतुं कदापि कालं न प्राप्नुवन्ति आधुनिका जनाः। येन केन प्रकारेण यदि साहित्यग्रन्थान् पठितुं प्रयतन्ते तर्हि तेषां क्लिष्टां क्वचित् क्वचित् ग्रन्थिविशिष्टां भाषां शैलीं च दृष्ट्वा तान् दूरादेव प्रणमन्ति।

अतएव वर्तमानकाले परम्परागतायां भाषायां शैल्याञ्च क्रान्तिकलितं परिवर्तनं विधातव्यम्। आधुनिका संस्कृतलेखकाः उपर्युक्तानि तथ्यानि प्रति किञ्चित् जागरूका दृश्यन्ते।

प्रबन्धकाव्यविधासु महाकाव्यस्य स्थानं सर्वोत्कृष्टं मन्यते। महाकाव्यस्य प्राचीना परम्परा अद्यापि अविच्छिन्ना अनुभूयते। वर्तमानकाले लिखितेषु महाकाव्येषु को न जानाति भगवदाचार्यविरचितं "महात्मागान्धिचरितम्", विद्वद्वरद्विजेन्द्रनाथरचितम् "स्वराज्यविजयम्" श्री विष्णुदत्तविरचितं च "गङ्गासागरीयम्।

विविधानि खण्डकाव्यान्यपि विरचितानि वर्तमानयुगे। तेषु "सत्याग्रहगीता", "स्वराज्यविजयम्", "कथापञ्चकम्", "ग्रामज्योतिः" इति नामधेयानि क्षमारावपण्डिताकृतानि अतिप्रसिद्धानि। प्रो० इन्द्रमहोदयानां गीताशैल्या प्रणीता 'गान्धिगीता' अपि उल्लेखनीया अस्ति। श्रीब्रह्मानन्दविरचितं "गान्धिचरितमपि" श्लाघनीयं खण्डकाव्यं वर्तते। डा० मंगलदेवमहोदयानाम् "अमृतमंथनमपि" श्रेष्ठम्—आध्यात्मिकं खण्डकाव्यमस्ति। श्रीलक्ष्मीनारायण-कृतं "राष्ट्रपतिगौरवम्" पद्यबद्धः इतिहासग्रन्थोऽस्ति। अस्मिन् ग्रन्थे कांग्रेसस्य इतिहासो वर्णितः। श्रीनृसिंह-अप्परावविरचिते 'गङ्गालहरी' 'पञ्चवटी' च नामनी द्वे प्रसिद्धे काव्ये स्तः।

वर्त्तमानयुगे गद्यविधानामपि विकासः संजातः। श्रीनिवासशास्त्रिमहोदयेन 'चन्द्रमहीपतिसूर्यप्रभाकृष्णावतारसर्वाभ्युदयनामधेयाः' रमणीया उपन्यासा उपनिबद्धाः, डा० रामजीमहोदयानां 'द्वा सुपर्णा' इत्यभिधानां सुमनोहरां गद्ये निबद्धां कथाकृतिं के न जानन्ति। विद्वद्वरैः श्रीरामशरणशास्त्रिमहोदयैः व्याकरणनियमानधिकृत्य सुललितगद्ये 'कौमुदीकथाकल्लोलिनी' नाम रमणीया रचना कृता।

नाटकसाहित्यस्यापि समृद्धिः समुल्लेखनीया अस्ति। श्रीमथुराप्रसाद-विरचितानि नाटकानि महत्त्वपूर्णानि सन्ति। तेषु "वीरप्रतापः" भारत-विजयं' 'शङ्करविजयं' 'पृथ्वीराजः' 'गान्धिविजय' मित्यादीनि विशेषेण उल्लेखनीयानि वर्तन्ते। श्रीयतीन्द्रविमल-चौधरी-विनिर्मिते द्वे नाटकेऽपि प्रसिद्धे स्तः। "निष्किञ्चनयशोधरम्' 'महिमभारतम्' इति क्रमशस्तयोः नामनी। श्रीमहालिङ्गशास्त्रिविरचितम् "उभयरूपकम्' नाम प्रहसनं ज्ञेयमस्ति।

श्री कै० यल० शास्त्रिविरचितं लीलाविलासप्रहसनमपि नोपेक्ष्यम्। श्रीभगीरथत्रिपाठिविरचितं कृषकाणां नागपाशः' इति रेडियोरूपकमपि प्रसिद्धमस्ति। समादरणीयायाः क्षमारावपण्डितायाः सुपुत्र्या लीलाराव-दयालमहोदयया लिखितानि एकाङ्किरूपकाणि अतिप्रसिद्धानि विद्यन्ते। तेषु 'बालविधवा', 'होलिकोत्सवः', कटुविपाकः' 'मिथ्याग्रहणम्' 'गणेश-चतुर्थी' आदीनि विशेषेण विश्रुतानि।

संस्कृतभाषामयानां पत्राणां परिचयेन विना अपूर्णमिवावभासते इदमभिभाषणम्। तेषु 'संस्कृतसाकेतम्' सुप्रभातम्' 'सूर्योदयः' "साग-रिका" इति नामधेयानि सुप्रसिद्धानि। तेषां प्रचारस्तु न कुत्रापि यथोचितः दृश्यते।

आधुनिकसंस्कृतसाहित्यस्य समुन्नतये विचार-प्रचार-निर्णयादिकं सर्वं कर्तुं समागतान् भवतो गीर्वाण्या गौरववाहकान् प्रति किमपि वक्तुं प्रवृत्तोऽहं किञ्चित् प्रास्ताविकं न्यवेदयम्। सर्वञ्च कार्यं भवद्भिरेव विधास्यते। प्रार्थये भगवन्तं संगोष्ठ्याः साफल्यायेति शम्।

— — —

While introducing the audience to the significant purposof the seminar, Sri Shridhar Bhaskar Vernekar spoke on the potentialities of the modern Sanskrit literature. The following is a gist of his speech:—

## आधुनिकसाहित्य-माहात्म्यम्

साम्प्रतं भारतवर्षे संस्कृतभाषा उपेक्षिता–इति परिलक्ष्यते अनुभूयते च, तथैवार्वाचीनसंस्कृतसाहित्यमपि । इदानीमपि संस्कृतभाषायां साहित्यं विरच्यते—इति श्रुत्वा लोकानां मन आश्चर्यनिर्भरं संजायते । संस्कृतं तु मृतभाषेति मिथ्याधारणा ।

यद्यपि संस्कृतभाषाया बह्वो वक्तारो न सन्ति तथापि संस्कृतभाषायां ग्रन्थलेखका दरीदृश्यन्ते । संस्कृतमाश्रित्याध्ययनाध्यापनं भवति, नाटकानि अभिनीयन्ते । प्राणमयीयं भाषा इत्थं प्रगुणा दृश्यते ।

योरपीयविद्वद्भिः सप्तदशशतकपर्यन्तमेव संस्कृतसाहित्यं पर्यालोचितम् । सागरविश्वविद्यालये अनुसन्धानपराश्छात्राः प्राध्यापकाश्च परवर्तियुगीनसाहित्यस्याभिवृद्धिं मूल्याङ्कनं च कर्तुं तत्पराः सन्ति । अयं परिसंवादः तदेवाधिकृत्य समायोजितो वर्तत इति नितरां हर्षस्थानम् ।

हे भारतवाणीप्रणयिनः । आगच्छन्तु । सर्वे वयं मिलित्वा संस्कृतभाषायाः सनातनगौरवमनुभवेम, शाश्वतजीवनं चास्या भाषायाः प्रत्यक्षीकरिष्यामः ।

विगतेषु शतकेषु परः सहस्राः संस्कृतग्रन्था विरचिता येषां मयाध्ययनं कृतम्, मराठीभाषायां निबद्धोऽपि कश्चिदितिहासः अर्वाचीनसंस्कृतसाहित्यस्य । जना न जानन्ति, परं संस्कृतस्य प्रवाहः सम्यक्तया अद्यापि भारतखण्डे सर्वत्र प्रसरति । संस्कृतलेखका न धनाकांक्षया न वा सम्मानार्थमपि तु केवलं संस्कृतानुरागेणैव संस्कृतेन लिखन्ति । परं न सन्ति श्रोतारः पाठकाश्च । सागरविश्वविद्यालयोऽस्मिन् कर्मणि प्रवृत्तः, संस्कृतविभागाध्यक्षः प्राध्यापकाश्च आधुनिकसंस्कृतसाहित्यमधिकृत्य परिसंवादमायोजितवन्त इति नितरां प्रमुदितान्तरङ्गोऽहम् । एष प्रयासः साफल्यं व्रजतु—इति सप्रत्याशंससाधुवादं च कामये ।

Announcing the conclusion of the inaugural function, Dr. Biswanath Bhattacharya, the secretary of the seminar, thanked the audience as follows :

## धन्यवादः

सागरनगरे श्रीमतां सर्वेषामतिथीनां समागमेन नूनं नगरमिदमद्य तीर्थीभूतम् । संस्कृतं नाम भारतीयानामात्मिकी भाषा । अस्या महत्त्वं विद्वद्भिर्बहुशो गीतं गीयते च । परं जनानां हृदये अस्याः सम्यङ् महत्त्वं पुनरपि प्रतिपादयितुं अस्या भाषाया व्यापकतमेनैव प्रयोगेणैतस्याः सार्वकालिकत्वं महत्त्ववैलक्षण्यं च प्रमाणयितव्यम् । भावप्रकाशनस्य श्रेष्ठं साधनमियं भाषेति प्रमाणयितुं संस्कृतज्ञानां संस्कृतलेखनं परमावश्यकम् । तथा च आधुनिकयुगे यत्संस्कृतेन साहित्यं विरचितं विरच्यते च तत्तेषामध्ययनं समालोचनं च यथा विद्यापीठेषु भवेत्तदर्थं प्रयतनीयम् । अस्मिन् परिसंवादे आधुनिकसंस्कृतस्य महत्त्वं विकासं च श्रीमन्त आलोचयिष्यन्ति । अयमवसरो येषामनुग्रहेण सम्प्राप्तस्तेषां विश्वविद्यालयानुदानायोगकर्त्तॄणां श्रीमतामुपकुलपतिपादानां च नितरां कृतज्ञा वयम् । अतिथिभ्यः सप्रश्रयं निवेदनमस्माकं त्रुटीः समुपेक्ष्य करुणया कृतार्थीकरणीया वयमिति । सर्वेषां भवतां वक्तॄणां विदुषां श्रोतॄणां च सहयोगेनैव सफलं भविष्यति समायोजनमिदमिति सर्वेभ्यो भवद्भ्यः परिसंवादसमितिपक्षात् भूयोभूयः साधुवादान् निवेदयामः । अयमारम्भः शुभाय भवतु ।

— —

# महामहोपाध्यायो रामावतारशर्मा

अच्युतानन्द झा

भारतस्याद्यावधि विंशशताब्द्याः संस्कृतज्ञानां मौलिभूतः बहुविधज्ञान-विज्ञानरत्नोदधिर्वासीद्रामावतारशर्मा। स तु प्राचीनविद्यासु निष्णातस्सन् तासां समुद्धारानुसन्धानरतो बभूव। संस्कृतज्ञानां नवीनयुगं प्रति हेयताबुद्धिं नासौ कदाचित् समर्थितवान्। कलौ दुराचाराणां बाहुल्यं भवत्येवेति नासीत्तस्य मनीषा। प्राणिजगतः श्रेष्ठसृष्टीनां मानवानां स्वकीयैः सुप्रयासैरेव दुराचारा दूरीकरणीया इति सिद्धान्तमनुसृत्य परम्पराप्राप्तानां सिद्धान्तानां तत्त्वनिरूपणपूर्वकं हेयोपादेयताविचारकर्मणि शर्मणो युक्तिनिष्ठं मानवताभित्तिकञ्च गवेषणं परिलक्ष्यते। यथा आर्यजात्या विश्वेऽस्मिन् सर्वोत्कृष्टं महत्त्वं गौरवञ्चाधिकृतं तया वर्तमाने भविष्यत्यपि काले गौरवान्वितयैव भाव्यम्। अन्यथा तस्या गौरवचर्चा निरर्थके वागाडम्बरे पर्यवस्यति। नवीनभारतस्य यथार्थः प्रतिनिधिः शर्मपादोऽनेनैव कारणेन मानवजीवनस्य प्रत्येकं पक्षं स्वमननविषयीचकार। उपक्रमेऽस्मिन् तस्यासाधारणं शास्त्रपरिशीलनमनुग्राहकमभवत्। सत्यासत्यं वस्तुजातं समीक्ष्य यदि शास्त्रं सन्मार्गमुपदिशति तर्हि शर्मणावश्यं शास्त्रमनुसृतम्। यान्यनवद्यानि तान्येव सेवनीयानीत्यासीत्तस्य महिष्ठ उपदेशः।

समाजसंस्कारात्मिकासु प्रवृत्तिषु शर्ममहाशयस्य विचारादर्शा भौतिकत्वपरास्तर्काधिष्ठिताश्च। तस्य रचनासु मानवमात्रस्य मङ्गलचिन्तनं प्राधान्येन दृश्यते। देशकालस्थित्यनुसारं रामावतारेण सत्स्वपि मनुस्मृत्यादिग्रन्थेषु रामस्मृतिनामकोऽभिनवो ग्रन्थः प्राणायि। प्राचीनाः स्मृतिग्रन्थानां क्वचिद् जातिवादसम्प्रदायवादैः प्रभाविता आसन्, किन्तु शर्मप्रणीतः स्मृतिग्रन्थो मानवतावादिनीभिर्युक्तिवादिनीभिर्विचारधाराभिः समन्वितो न तादृशं प्रस्तौति। ग्रन्थारम्भे तेन प्रोक्तम्—

> संगृह्य प्राच्यसिद्धान्तान् हिताय जगतः शिवम्।
> तत्त्वं शाश्वतधर्मस्य संक्षेपेणात्र वर्ण्यते॥

(श्रीरामावतारशर्मनिबन्धावली पृ० २५७)

धर्ममूलम्, शौचम्, आचारः, भक्तिः, आश्रमधर्मः, द्विजातिधर्मः, व्यक्तिधर्मः, स्त्रीधर्मः, प्रजाधर्मः, प्रायश्चित्तमित्यादीनि निखिलानि मानवजीवनोपयोगीनि व्यवहारतत्त्वानि शर्मणा स्वग्रन्थे सम्यग् विवेचितानि। विवाहविषये शर्ममहोदयस्य मतमित्थं वर्तते—

आविंशं ब्रह्मचारीस्यादसपिण्डां यवीयसीम्।
कान्तामव्याधितां चाथ तरुणीं स्त्रियमुद्वहेत्॥
(श्रीरामावतारशर्मा निबन्धावली पृ० २६४)

सिद्धान्तमिममनुसृत्य बालविवाहोऽपि तेन निषिद्ध एव। असमवयस्कविवाहन्तु स उद्वाहाभासशब्देन व्यपदिशति। असौ हि विधवाविवाहं समर्थयति। तद्विषयेऽस्य विचारा युगोपयोगिनः।

समैथुने विवाहे तु विधवा कामतः पतिम्।
पुनर्द्वितीयं कुर्वीत न तु गर्भादिपातनम्॥
(श्रीरामावतारशर्मनिबन्धावली पृ० २६५)

विशेषतोऽस्मिन् धर्मशास्त्रे शर्ममहाशयस्योपदेशत्रयं दरीदृश्यते। तच्च—(१) परमार्थसेवनम्, (२) अव्याहतानुसन्धानम्, (३) व्याहतपरित्याग इति।

शर्मनिर्मिते 'सत्यदेवकथा—नाम्नि ग्रन्थे सत्यानुभ्रातॄणामाशीर्वचनप्रसङ्गे परमार्थसेवनस्योपदेशः—

परमार्थपराः सर्वे जायन्तां भवतः कुले।
सरस्वतीमुपासीना महोद्योगा गतभ्रमाः॥
श्रीसत्यदेवकथातः

स्वप्रणीते परमार्थदर्शनाख्ये दर्शनग्रन्थे तेन व्याहताव्याहतयोः स्वरूपं सविस्तरं प्रपञ्चितम्। तयोः स्वरूपं किञ्चित् ततस्तथैवोदाह्रियते—

व्याहतस्य—

पादुकाभ्यां वियद्यात्रा मस्करी वह्न्यवस्करः।
भ्रूकुंसानुचरो रामः सतीनीवेस्तनूनपात्॥
भक्ताकारो हरिर्दृष्टः केशः सर्पत्वमाप्तवान्।
निर्विद्यः सर्वविद्दृष्टो भिक्षुश्चैवेष्टवृष्टिकृत्॥

तथा चाव्याहतस्य—

जले स्थले च पाताले वाष्पनौकादिभिर्गमः।
विदुषां सेवनं नित्यं शिल्पशास्त्राद्यवेक्षणम्॥

हरेरखेदनं स्वार्थे त्यागः सर्वज्ञमानिनाम् ।
विषव्याधिव्रणादीनां सद्भिषग्भिश्चिकित्सनम् ॥
(अधिकरणरत्नमाला पृ० २)

रामावतारशर्ममहोदयस्यासीत् किञ्चिद् वैलक्षण्यं तर्कसरण्याम् । नह्यपरीक्ष्य किमपि वस्तु स तथा स्वीकरोति यथा—अव्याहतानुसन्धान-विमुखो जनः । अनेनाज्ञामात्रमपि परीक्ष्यैव तत्कर्मणि प्रवर्तितुमादिश्यते । यथा हि—

जलमानय पुत्रेति विधेयाज्ञा पितुर्द्रुतम् ।
वाराणसी-हिमाद्रावित्यपरीक्ष्य न मन्यते ॥
वन्ध्यापुत्रशिरोवर्ति हेमपात्रं गृहान्तरे ।
तदानयेति व्याघातग्रस्तं सद्य उपेक्ष्यते ॥
(श्रीरामावतारशर्मनिबन्धावली पृ० २५९-६०)

व्याहतिदुष्टस्य वस्तुनः परीक्षामपि नैवानुमोदतेऽयम् । तथोच्यते—

परीक्षापि न कर्तव्या व्याहतानां कदाचन ।
वन्ध्यापुत्रोऽस्ति नास्तीति न केनापि परीक्ष्यते ॥
मृतैर्वार्ता पिशाचैश्च रक्षा दिव्यैः समागमः ।
नद्या घृतं तथा मन्त्राद्द्रव्यं योगात्खचारिता ॥
(श्रीसत्यदेवकथा ७-२१-२२)

पौराणिकसाहित्यस्य व्यापकं प्रभावं वीक्ष्य तद्द्वारेणैवासौ जनानुपदेष्टुमकामयत । सर्वविधालौकिकप्रपञ्चपरिहारपूर्वकं वास्तविकं ज्ञानं विना राष्ट्रस्य यथार्थोऽभ्युदयो न कदापि सम्भाव्यत इति प्रत्ययेन शर्ममहोदयो रूढीनां निष्क्रियतायाश्चोपासनां निरस्य युगोपयोगिनीं सत्यदेवकथां विरचितवान् ।

धार्मिकव्यावहारिकदार्शनिकभूमिकायां पारस्परिकं सामञ्जस्यं परिहाय न कोऽपि सिद्धान्तो दृढीभवतीत्येव विचिन्त्यानेन सत्यदेवकथायां धर्मस्य स्वरूपं शतश्लोकीये धर्मशास्त्रे च व्यवहारस्य स्वरूपं सम्यङ् निरूप्य तृतीयः पक्षः परमार्थदर्शने प्रतिपादितः । सत्यदेवकथाया बीजमित्थमुपन्यस्यत्यसौ —

भगवन् मूर्खताग्रस्तं भारतं पापदूषितम् ।
तस्योद्धारः कथं भावी तद् भवान् वक्तुमर्हति ॥
(श्रीसत्यदेवकथा—अ० १ श्लोक २)

कथायामस्यामष्टावध्यायाः सन्ति । मूर्खताग्रस्तं भारतं तत्तद्वस्तु-विशेषेण विषयविशेषेण च सुबुद्धं कल्पयितुं यतमानो लेखकोऽवान्तर-कथाभिः सत्यनारायणस्य भगवतो माहात्म्यव्रतादिकं प्रपंचय्य प्रथमेऽध्याये भूसृष्टिः, द्वितीये पृथिव्याः स्थितिः, तृतीये आर्याणामितिहासः, चतुर्थे भारतेतिवृत्तम्, पञ्चमेऽसत्यासुरस्य जन्म, षष्ठे सत्यदेवकथाया दम्भदूषणम्, सप्तमे चाध्याये व्याहृतपरित्यागपूर्वकमव्याहृतानुसन्धानो-पदेश इत्येते विषयाः सप्रपञ्चं विवेचिताः ।

विज्ञानस्य विकासेन पाश्चात्यदेशानामुत्तरोत्तरामभिवृद्धिं परिलक्ष्य भारतीयानान्तदानीन्तनयावस्थया नितरां खिद्यमानसेन शर्मणा भारतस्य वन्ध्यापुत्रानुसन्धानसमाजे कठोरः कशाघातो विहितः । निम्नोदाहृतैः पद्यैर्भाग्यहीनस्य भारतस्य दयनीयं चित्रमवश्यं स्फुटीभवति—

केचित्पुमांसः स्त्रीवेषाः पुंवाचालाः स्त्रियः पराः ।
उपवीतार्पणव्यग्रा मद्यपेषु तथा परे ॥
अपरे वेदशिविकावाहनाल्लब्धजीविकाः ।
श्राद्धदक्षिणया वेश्यास्तर्पयन्तस्तथा परे ॥
(श्रीसत्यदेवकथा अ० ६ श्लो० ३१-३२)

धर्मसदाचारौ समर्थकाविति समर्थकस्य तस्य रामावतारस्य धर्म-सम्बन्धिनो विचाराः संस्कृतसाहित्ये सर्वथा नवीनं प्रस्थानं निर्दिशन्ति । नितान्तं नवीनाया एतस्या धर्मभावनाया वैलक्षण्यं वर्तते वैज्ञानिकसत्य-निर्भरत्वम् । नहि कुत्रचिदधर्मानुमोदितो धर्मो वैज्ञानिकसत्यमुल्लंघयति । इत्थं महामहोपाध्यायेन शर्मणा धर्मस्य विज्ञानयुगोचितं स्वरूपं कल्पितम्, तच्च शास्त्रीयमर्यादासमन्वितं सन्नवयुगसंस्कार-भावनां सन्तर्पयति ।

व्याहृतानुसन्धानव्यापृताञ्जनान् दृष्ट्वा नितरां रामावतारशर्मणो मनो दूयते स्म । विज्ञानप्रियोऽयं मायावादोऽसच्छास्त्रमिति कृत्वा धूर्तमूर्खप्रख्यापितानां मिथ्याप्रलापानां परीक्षणेऽनुसरणे च कालशक्ति-धनानां व्ययं सर्वथा धिक्कृतवान् । भारतानामुन्नतिं लक्ष्यीकृत्यासावेव-मभिप्रैति—

मायाशून्याद्यसद्वादाः पिशाचाद्यर्चनानि च ।
सद्विज्ञानेऽवभक्तिश्च यावद्देशेऽत्र वर्तते ॥
तावन्नास्योन्नतिः कापि कदाचित्संभविष्यति ।
मूर्खतायामभक्तिर्हि लक्षणं परमुन्नतेः ॥
(श्रीसत्यदेवकथा—अ० ६ श्लोक २६-२७)

## नवीनं प्रस्थानम्

नाटक-काव्य-निबन्ध-चम्पू-धर्म-दर्शनेतिहास-कोशादिषु विविधक्षेत्रेषु रामावतारस्य विशिष्टं वक्तव्यमस्ति । दूतकाव्यपरम्परायां "मुद्गरदूतम्" नवोन्मेषकारी प्रयासः । मोहाच्छन्नस्य समाजस्य (भारतस्य) दुराचारान् वन्ध्यापुत्रानुसन्धानशब्देनाभिधाय समस्तं जनसमाजमव्याहतानुसन्धाने नियोजयितुकामस्य शर्मणो युक्तिर्नवयुगनिर्माणाधारशिला विद्यत इति मे मतिः ।

सन्देशकाव्यपरम्परायां मुद्गरदूतं नव्यधारायाः प्रतिनिधिस्थानीयं वर्तते । काव्यस्यास्य नायको विरही मूर्खदेवोऽस्ति । एतस्यावस्थितिचित्रणं शर्मणेत्थं विहितम्—

कश्चिन्मूर्खश्चपलविधवास्नानपूतोदकेषु ।
स्वान्ते कुर्वन्निति समवसत्कामगिर्याश्रमेषु ॥
(पूर्वमुद्गर—श्लोक-१)

तद्वदेवास्य पूर्वजन्मसम्बद्धायाः पत्न्या वर्णनमपि स्वैरिणीनां स्वरूपज्ञानायऽलम्—

तां जानीथाः प्रलपनपटुं मृत्युदेवीं द्वितीयां
दूरीभूते मयि सहचरे तत्र घूकीमिवैकाम् ।
गाढामोदां तनुषु दिवसेष्वेषु गच्छत्सु वृद्धां
जातां मन्ये विटपतियुतामश्वभार्यामिवान्याम् ॥
( उत्तरमुद्गर—श्लोक ११३ )

अथ च—

श्रोष्यत्यस्मात् परमवहिता मुद्गर स्वैरिणीनां
भर्तुर्वृत्तं सुहृदुपनतं वेदनामेव धत्ते ।
( उत्तरमुद्गर श्लोक ११९ )

कथं नाम धूर्तः समाजे स्फीतकीर्तिर्भवति तदपि शर्ममहोदयेन मूर्खदेवस्य चरित्रचित्रणे सम्यगाकलितम्—

नीतिव्याख्यासमितिषु तथा धर्मवार्तासदःसु
प्रायो नाट्येष्वथ शवखनिष्वाश्रमेषूद्भटानाम् ।
व्यर्थं क्षिप्त्वा भरतवसुधा द्रव्यकोटीः स कीटो
देशप्रेमोल्बणभणितिभिर्नाशयामास विद्याम् ।।

( पूर्वमुद्गर—श्लोक—१५ )

बिभ्यद्भूताच्चपलविधवासङ्गमैः पूतचैत्यः
प्रायश्चित्तं मुहुरुपदिशन् स गृहस्थेषु पापः ।
कोटीश्चिन्वन् जगदुपदिशन् स्वप्नमायोपमानं
गाथा वेदानिव परिपठन् स्फीतकीर्तिर्बभूव ।।

( पूर्वमुद्गर १८ )

मूर्खदेवस्य कृते प्रयुक्तानि विशेषणानि—तरुणविधवाभ्रूणहत्यापराधी, सर्वाशुद्धिप्रणयिहृदयः, धर्मव्याख्याचटुलरसनः, यतिकुलपतिरित्यादीनि समाजाग्रणीनां धर्मध्वजिनां स्वरूपनिरूपणे स्फुटमुपयुक्तानि सन्ति ।

सम्पूर्णस्यास्य मुद्गरदूतस्यानुशीलनेन जायते कश्चन विस्मयकरो निष्कर्षो यदसौ सामाजिकान् व्याहृतिश्रद्धादीन् दुर्गुणान् समीपतो निरीक्षते स्म । एतानानाचारान् सोढुं कथमेतादृशोऽसामान्यप्रतिभावान् क्रान्तिकारी शर्ममहाशयः प्रभवेत् ? अनेनैव कारणेन तस्य वाणी द्विधा मुखरिता—मुद्गरदूते संस्कृतश्लोकशैल्या मुद्गरानन्दचरितावल्याञ्च हिन्दीगद्यशैल्या ।

संस्कृतनिबन्धसाहित्ये रामावतारशर्मा पथिकृदभवत् । हृषीकेशशास्त्रिभट्टाचार्यः, विद्यावाचस्पतिरप्पाशास्त्रिराशिवडेकरः, महामहोपाध्यायो रामावतारशर्मा चेति त्रयो विद्वांस आद्यनिबन्धकर्तार इति शब्देन व्यपदेशमर्हन्ति । अमुष्य निबन्धेषु विषयवैविध्यं शैलीवैविध्यञ्च प्राप्येते । तत्र कविकाव्यसमीक्षात्मकवैज्ञानिकदार्शनिकभाषाशास्त्रीयादिनिबन्धाः संस्कृतनिबन्धधाराया विशिष्टमार्गनिर्देशकाः ।

कविकाव्यसमीक्षात्मकाः शर्ममहोदयस्य बहुशो निबन्धा मित्रगोष्ठीपत्रिकायां साहित्यरत्नावलीति शीर्षकेण प्रकाशिताः । कविकाव्यसमीक्षात्मकास्ते निबन्धाः सरलया गिरा प्रौढ्या शैल्या च सत्यं समलङ्कृता

विद्यन्ते। नातिदीर्घा नातिह्रस्वाश्चेमे निबन्धाः संस्कृतसाहित्येतिहासरचनायां भित्तिभूताः। रामावतारशर्मोपज्ञा हि संस्कृतसाहित्येतिहासरचनारीतिः। एष एव महाभागः पथिकृदत्रेति नो मतिः। प्रायः सर्वेष्वस्य निबन्धेषु प्राप्तं गवेषणसमीक्षणनैपुण्यं निबन्धरचनायामादर्शस्थानीयम्। अस्य समीक्षासरणौ यादृशी सरसता दृश्यते, न सा सामान्यसमीक्षकसुलभा।

संस्कृतभाषाविषयका बहवो निबन्धा बहुभिर्लिखिताः। तेषु शर्मप्रणीतः "संस्कृतशिक्षा कथमुपयुक्ता भवेत्" इति निबन्धः सर्वोत्कृष्टः। कापि भाषा केवलं भक्त्या युगोपयोगित्वं नाधिगच्छतीत्यासीत्तस्य महीयान् विचारः। तस्मिन् निबन्धे संस्कृतभाषां सुदृढायां भित्तौ संस्थापयितुं तेन निर्देशितो मार्ग एव संस्कृतभाषाप्रचारप्रसारयोर्मुख्यतमं साधनमित्यस्माभिर्निः शंसयं वक्तुं पार्यते। यदि 'मृतभाषा' इति कलंकात् संस्कृतं मोचयितुं भवन्तः संस्कृतज्ञा ईहन्ते तर्हि तन्निर्देशितो मार्ग एव भवद्भिरनुसरणीयः।

देशान्तरीयेतिवृत्तं शर्ममिश्रस्य व्यापकमैतिह्यज्ञानमतुलनीयं भाषाधिकारञ्च द्योतयति। पाश्चात्यजातिसम्पर्कितोऽपि संस्कृतज्ञसमाजो नितरां पाश्चात्यसभ्यतासंस्कृतिविषयेऽनभिज्ञ आसीत्। फलतो भारतेतरदेशानामितिहासविरचनेन संस्कृत इतिहासाभावस्तेन दूरीकृतः। अस्य प्रवाहमय्या शैल्या शर्ममहाभाग ऐतिहासिकेषु श्रेष्ठकोटिमधिरोहति। इजिप्टदेशस्य प्रागैतिहासिकसभ्यताया आरभ्य फ्रांसराज्यक्रान्तिं यावत् यूरोपखण्डस्य समग्रं किन्तु संक्षिप्तमैतिह्यं सुखपाठ्यैः श्लोकैरुपनिबद्ध्य संस्कृतसाहित्यस्य क्षेत्रं भूषितम्। रोमकाणां पोपसाम्राज्यवर्णने शर्ममहोदयेन पोपानां स्वेच्छाचारो बहुशो विगर्हितः। यथाहि—

> दासैश्च दासपायैश्च भूबद्धैः कृषकैरपि।
> सेव्यमानाः स्वतन्त्रत्वात्तेऽभवन् स्वैरचारिणः॥
> भक्ष्यमाणाः प्रजाश्चैव रक्षकैरेव भूरिशः।
> पतिताः पारतन्त्र्याग्नौ चुक्रुशुः भृशदुःखिताः॥
> रोमकादौ कृतावासा यति-लिंगा पुरोधसः।
> भूदेवाः समजायन्त यदृच्छाचारतत्पराः॥

(प्रकीर्णप्रबन्धये पृष्ठ ५२१)

'भारतीयमितिवृत्तम्' 'देशान्तरीयेतिवृत्तम्' इति ग्रन्थद्वय द्वाविंशति-वीचिषु विभक्तं वर्तते। समेषां वीचिस्थानां श्लोकानां संख्यैकचत्वारिंश-दुत्तरनवशतमस्ति। वस्तुवर्णनप्रसंगे तत्तद्देशनामानि व्यक्तिनामानि च सर्वत्र संस्कृते विपरिणमितानि। उदाहरणार्थं केचन विपरिणमिताः शब्दा अधो दीयन्ते—

| | |
|---|---|
| अकबर | अर्वंवर |
| एलेक्जेन्डर | अलक्षेन्द्र |
| ,, | अलीकचन्द्र |
| अमेरिकन | धूर्तेश्वर |
| अरेबिअन | आरब्य |
| अरिष्टाटल | अरिष्टास्तर |
| औरंगजेब | उरगजिह्व |
| अगष्टस | अगस्त्य |
| आष्ट्रिया | अस्त्रिय |
| बी० ए० | कलाकुमार |
| वेबीलोन | भव्यलूनपुर |
| बायस्कोप | चित्रजीवक |
| ब्लाइण्डस्कोप | प्रभापरिमोषक |
| ब्रूटस | भ्रतुश |
| केबुल | वार्तातन्त्री |
| कैंडिज | गाधिज |
| कैल्सियम् | कठिनी |
| कोलम्बस | कुलुम्ब |
| केम्ब्रिज | कामसेतु |
| कारथेज | करध्वजपुर |
| सीजर | केशरी |
| क्लोरिन | पिंगलम् |
| क्रोमियम् | वर्णकम् |
| क्रेन | वक्रयन्त्र |
| क्रीट | क्रीतद्वीप |
| क्रामवेल | क्रमबल |

| | |
|---|---|
| डन-क्विकसोट | दीनकुत्सित |
| एडिशन | आदिसूनु |
| एडवर्ड | आद्यव्रत |
| इजिप्ट | अजपुत्र |
| फ्रेन्च | स्फारांग |
| जार्ज | जयोर्ज |
| जर्मन | शर्मण्य |
| ग्रामोफोन | स्वनग्राह्ययन्त्र |
| ग्रीनलैण्ड | हरितभूमि |
| ग्राइण्डिंग मिल | पेषणचक्र |
| हरक्युलिस | हरिकुलस, रुस्तम |
| हीरोडोटस | हरदत्त |
| हाइड्रोजन | जह्लजनक |
| इटली | हनुबलधरा |
| काण्ट | कान्त |
| खुफु | शुम्भ |
| क्रकोटक | क्रकचद्वीप |
| लोफ | स्थूलाभ्यूष |
| एम० ए० | कलाध्यक्ष |
| मर्करी | पारद |
| मेक्सिको | मक्षिका |
| मिन्वेह | निह्नवपुर |
| मिसिसिपि | मिश्रशिप्रा |
| नासोग्राफ | नासाग्रह |
| नेपोलियन | नयपाल्य |
| न्यूटन | नवतनु |
| न्यूयार्क | अनृता |
| न्यूजीलैण्ड | नवजीवनभूमि |
| नाइट्रोजन | क्षारजनक |
| आफिसर ( टिकट-कलेक्टर ) | अधिकृतपुरुष |
| आक्सफोर्ड | उक्षप्रतर |

| | |
|---|---|
| आक्सिजन | आम्लजनक |
| पैसिफिक ओसन | तुङ्गाम्बुराशि |
| पेरिस | परेश |
| परसियन गल्फ | पारस्यवाह |
| फिनिसियन | फनीश |
| फोनोग्राफ | अनुस्वानलेखक |
| फास्फोरस | प्रस्फुरक |
| पोष्ट सिष्टम | त्वरितप्रापणप्रणाली |
| पिरामिड | कोणागार |
| रेलवे | वाष्पानस् |
| रेलवे-कैरेज | वाष्पयान |
| रेलवे-स्टेशन | वाष्पयान-स्थान |
| रेष्टुरेन्ट कार | अशनशकट |
| रोमान्स | रोमक |
| शिप | प्रवहण |
| सिसिली | श्रीशल्य |
| सॉक्रेट | सुक्रतु |
| स्पेन | सुफेना |
| स्ट्रेट आव जिब्राल्टर | हरिकुलमुख |
| स्वेजकैनाल | सुबीजकुल्या |
| टेलीफोन | दूरानुस्वानक |
| द इंगलिश | श्वेतद्वीप्य |
| टिकेट | शुल्कपत्र |
| टाइपराइटर | मुद्रालेखक |
| वास्कोडिगामा | वस्क |
| विक्टोरिया टर्मिनस | व्यक्तोर्जान्तिम |
| विक्टोरिया | विक्टोर्जा |
| वाल्टेयर | वातारि |

इत्थं प्रायोऽसंख्याः शब्दाः संस्कृते विपरिणमिता विद्यन्ते ।

ऐतिहासिकानां प्रधानो दोषस्तस्य पक्षपातदृष्टिः । इतिहासग्रन्थे ऐतिहासिकानां रुच्यरुच्योः स्थानं नहि कदापि युज्यते । रामावतार-

शर्मणो द्वावपि इतिहासग्रन्थौ ( भारतीयमितिवृत्तम्, देशान्तरीयेतिवृत्तम् ) अनया दृष्ट्या प्रथमकोटिकौ। इजिप्टबेबीलोनग्रीसादिदेशानां प्राचीना सभ्यता कालान्तरे विध्वंसिता किन्त्वैतिहासिकः शर्ममहोदयोऽनयोरुत्थानपतनयोर्निष्पक्षदृष्ट्या कालगतिमेव पश्यति। तथा हि—

अथाजपुत्राः किल सभ्यताधुरं
समर्प्य यद्योग्यतरासु जातिषु।
क्षयं शतैर्भेजुरुदारविक्रमा
न चित्रमेतत्प्रकृतिर्हि तादृशी॥ ( प्रकीर्णप्रबन्धतः )

नवजागरणयुगस्य संस्कृतसाहित्ये 'भारतगीतिका' सर्वप्रथमं देशभक्तेः प्रकाशः। गीतिकेयं स्वदेशभक्तेर्या युक्तिपूर्णामाधारशिलामधितिष्ठति सावश्यं विस्मयोद्‌पादिका। काव्यगुणैर्मण्डितेयं गीतिका न केवलं कवेर्भावोच्छ्वासमेव द्रढयत्यपितु सुनिश्चितं सिद्धान्तमपि समुपस्थापयति।

## सम्पादनकर्म

रामावतारेण सम्पादिताः ग्रन्थास्तस्य सम्पादनविज्ञानवैशारद्यं साधयन्ति। अधोलिखितास्ते प्रसिद्धाः सम्पादितग्रन्थाः—

| | | |
|---|---|---|
| १ सदुक्तिकर्णामृतम् | कलिकाता | १९१२ |
| २ प्रियदर्शिप्रशस्तयः | पटना | १९१५ |
| ३ विक्रमांकदेवचरितम् | काशी | १९२१ |
| ४ कल्पद्रुकोशः | प्रथम खण्ड, बड़ौदा | १९२८ |
| ,, | द्वितीय खण्ड ,, | १९२९ |
| ५ नारायण शतकम् | | |

अपूर्णैवाद्वितीया कृतिः शर्मणो विश्वकोशः। अस्मिन् कोशे कलाविज्ञानादीनां सर्वासां शाखानां विषयान् कोशीकृत्य श्लोकसमुच्चयेन स विनिबध्नाति स्म। अपूर्णोऽपि महानयं ग्रन्थः।

विश्वविद्याप्रकाशककोशस्य रचना कथमेकेन मनुष्येण साध्येति सत्यं विस्मयकरम्। अहो कर्मण्यता संस्कृतानुरागश्च शर्ममहाशयस्य यदयमप्राप्तेऽपि धनसाहाय्ये कर्मिसाहाय्ये च कुतश्चन, सव्यसाचीव रचयामास महाग्रन्थमेनम्।

'परमार्थदर्शनम्' तस्याप्रतिम पाण्डित्यं परिचाययति। ग्रन्थोऽयं

त्रैभाषिकः । तिसृषु संस्कृताङ्गलहिन्दीषु सूत्रवार्तिकवृत्तिभाष्यसमन्वितोऽयमभिनवप्रयोग एव ।

सत्यपि विविधदर्शनशास्त्रनिचये परमार्थदर्शनस्य प्रयोजनं प्रतिपादयता ग्रन्थकारेणोक्तम् –

संग्रहश्च विवेकश्च व्यवस्था नाग्रहस्तथा ।
उद्योगाभ्युदयौ चास्य दर्शनस्य प्रयोजनम् ॥
शिल्पशास्त्रपयसा सरस्वतीं
कामधेनुमिव विश्वतोषिणीम् ।
ह्यनुपास्य कितव प्रतारणां
पौत्रिणीमिव निषेवते जनः ॥
देवशब्दकलिदिव्यशक्तिभिः
ख्यापिताभिरिह धूर्तबालिशैः ।
वञ्चिते न परमार्थधीर्जने
तां पुनर्जीवयितुं यतामहे ॥
शास्त्रभारनतकन्धरा अपि
व्याहृतिप्रणयिनो विपश्चितः ।
तान्सुखेन परमार्थतत्परान्
कर्तुमेष विपुलः परिश्रमः ॥
( अधिकरणरत्नमाला—पृ० १-२ )

अत्र दर्शनशास्त्रस्य गूढतत्त्वव्याख्यया सह भारतीयसमाजस्य धर्मस्य च विवेचनीयानां तथ्यानां पुंखानुपुंखा मीमांसावलोक्यते । दर्शनशास्त्रविदामालोचकानामनुसारमयमभिनवो दर्शनग्रन्थः परमार्थप्रतिपादकत्वेन दर्शनस्य सप्तमकोटावापतीति तु निश्चप्रचम् ।

गद्य-पद्य-नाटक-चम्पू-दर्शन-कोशादीनामनेकानां काव्यप्रकाराणां रचनया विंशशताब्द्यां संस्कृतस्याद्वितीयोऽधिकारी रामावतारशर्माभवत् । विद्यानुरागेणोर्जस्विचारित्र्येणानेन न केवलं स्वयममरत्वं प्राप्तमपि तु समेषां विद्यानुरागिणां पुरत उच्चादर्शः सं स्थापितः । राष्ट्रियभावनया स्वदेशाभ्युदयचिन्तया चास्य संस्कृतरचनावश्यं महत्त्वभाजः । संस्कृतस्य पुनः प्रतिष्ठायामनुक्षणं संलग्नस्य महामहोपाध्यायस्य रामावतारशर्मणः साहित्यसाधना भारतीयविद्वत्समाजेन श्रद्धया स्मरणीया संस्कृतसेविभिश्च निष्ठयानुकरणीयेत्यलं पल्लवितेन ।

---

# कविकर्णपूरकृता काव्यमीमांसा

रेवाप्रसाद द्विवेदी

भारतरत्न-महामहोपाध्याय-श्रीमत्पाण्डुरंगकाणेमहोदयेन स्वकीये संस्कृतकाव्यशास्त्रेतिहासे पंचानाम् 'अलंकारकौस्तुभ'–नाम्नां ग्रन्थाना-मुल्लेखो व्यधायि, किन्तु तेषां मध्ये कस्यचनापि विषयविवरणं तेन जगन्नाथादिवत् नाकारि। एतेन सामान्यत इदं प्रतीयते यदेतेषु कदाचित् किंचिन्महत्त्वं नास्ति। सति तु महत्त्वे ग्रन्थान्तराणामिव तेषामपि संक्षिप्यापि विवरणं दीयेतैव। वस्तुतः स्थितिरेतादृशी नास्ति। अस्माभिः कर्णपूरकृतः विश्वेश्वरपंडितकृतश्च "अलंकारकौस्तुभः" परिशीलितः। द्वयोरप्यनयोः विचारप्रौढि शास्त्रपण्डित्यं च विस्मयावहे वर्त्तेते। अनयोरेकः सांप्र पाकिस्तानपतिताद् राजशाहिस्थानात् परश्च निर्णयसागराद् प्रकाशं गतः। कालक्रमेण कर्णपूरस्य विश्वेश्वरात् पूर्वभावित्वमस्ति। श्रीमत्काणेमहोदयानुसारं विश्वेश्वरः खीष्टाब्दस्य १८००–शतके कर्णपूरश्च १६००-शतके जातौ। ग्रन्थयोरप्यनयोर्विश्वेश्वरकृतो यः कौस्तुभस्तत्र नव्यन्यायस्य परमगभीरया रसगंगाधरसमीक्षापुरस्सरं प्रवृत्यया भाष्या अर्थालंकाराणामेव विचारः कृतः, किन्तु यः कर्णपूरकृतः तत्र काव्यप्रकाशादेव दशभिः किरणनामधेयैरध्यायैः काव्यांगानां समेषामेव विचारो यथाक्रमं कृतः। विशेषश्चायं यत कर्णपूरस्य कौस्तुभे केचन तथाविधा अपि प्रतिनवा उन्मेषा लभ्यन्ते, ये हि नितरां विस्म जनयन्ति। अत्र कर्णपूरस्यैव नवीनानामेव केषांचन विचाराणां समालोचनं क्रियते।

कर्णपूरः स्वकीये अलंकारकौस्तुभे काव्यप्रकाशकृतं च नामोल्लेखपूर्वं स्मरति। किन्तु काव्यलक्षणे तयोरनुकरणमकृत्वा स्वातन्त्र्येण प्रवर्तते। तत्र तयोः खण्डनं च प्रत्युत तेन क्रियते। काव्यलक्षणे स "लोकोत्तर-चमत्कारवर्णना-निपुणः कविः तस्य तादृग् वचः काव्यम्" इति वचनम् उपजीव्य प्रवर्तते "कविवाङ्निर्मितिः काव्यम्" इति काव्यलक्षणं विधाय तद् "असाधारण-चमत्कार-कारिणी रचना निर्मितिः"

एवं परिष्करोति । स्पष्टमेव यदसौ काव्यलक्षणे चमत्कारमपि निवेशयति । एतेन परवर्ती पण्डितराजो जगन्नाथो "रमणीयार्थप्रतिपादकः शब्दः काव्यम्" इति काव्यं लक्षयित्वा "स्व-विशिष्ट-जनकतावच्छेदकार्थ-प्रतिपादकता-संसर्गेण चमत्कारत्ववत्त्वम्" इति परिष्कुर्वन् काव्यघटकतया चमत्कारमपि च प्रतिपादयन् अलंकारकौस्तुभकारममुं दूरमनुहरति, यद्यपि स तं स्मरति क्वापि न । द्वयोरनयोरसौ हृदयसंवादोऽत्र विस्मयकृदेव ।

काव्यलक्षणं काव्यप्रकाशकृता यत् "सगुणौ" इति गुणपदं निवेशितं तस्याभिप्रायः अयमासीत् यत् यदि काव्यं सरसं स्यात् तर्हि शब्दार्थयोस्तन्निष्ठमाधुर्यादिव्यंजनक्षमता तिष्ठेदेव । यदि तु नीरसमपि स्यात् तदपि शब्दार्थानां सन्निवेशस्तथैव स्यात् येन काव्येतरशब्दार्थतः काव्यार्थयोस्तयोः व्यतिरेकः सुखमुन्नीयेत । यद्यपि काव्यप्रकाशकारस्यापि सरसमेव काव्यं काव्यतया वक्तुं प्रवृत्तिः दृश्यते यत्रासौ मंगलपद्य एव "नवरसरुचिरत्वं निवेशयति प्रयोजनेषु च "सद्यः परनिर्वृतिजनकत्वम्" कान्तावत् सरसतापादनेनोपदेशजनकत्वं" च प्रतिपादयति । उदाहरणं च त्रिविधेष्वपि काव्येषु प्रायेण असंलक्ष्यक्रमव्यंग्यानामेव ददाति । ध्वनिपद्ये च शृंगारमेवोदाहरणविषयं करोति "निश्शेषच्युतचन्दनम् इत्यादिकेन पद्येन अथापि तेन नीरसस्यापि काव्यस्य अकाव्यत्वं नाघोषि । कर्णपूरस्तु केवलं सरसं काव्यमेव काव्यं मनुते । तत्राप्ययं विशेषो यदसौ साहित्यदर्पणस्य "वाक्यं रसात्मकं काव्यम् इति काव्य-लक्षणे सरसत्वनिवेशपरं लक्षणं खण्डयति । साहित्यदर्पणकारः केवलं वाक्यमेव काव्यं मनुते, वाक्यं च शब्दात्मकमेव भवति, तेन हि तन्मते, अर्थस्य काव्यत्वं न संभाव्यते, कर्णपूरः पुनः अर्थस्यापि काव्यत्वम् "असाधारण-चमत्कारकारिणी रचना हि निर्मितिः" तेन रसापकर्षक-दोषरहितं यथासंभवगुणालंकारं रसात्मकं शब्दार्थयुगलं काव्यमिति लक्षणस्य स्वरसः" इति स्वीकरोति । साहित्यदर्पणकारस्य काव्ये प्रतिपाद्यं वाक्यैकनिष्ठत्वं कर्णपूरो नितरां वैदग्ध्येन खण्डयति । स हि अवाक्य-स्यापि काव्यत्वं दर्शयति कूर्म्मलोमपटच्छन्नः शशशृङ्गधनुर्धरः ।

एष वन्ध्यासुतो याति खपुष्पकृतशेखरः ।। इति च प्रसिद्धं वाच्यत्व-दशायां परस्परानन्वितानामर्थानां प्रतिपादकतया वाक्यत्वविरहितं पद्यं चोदाहरति । वस्तुतः पद्यमिदं वाच्यदशायां निरर्थकमपि व्यंग्यदशायां नितरामेवार्थनिर्भरम् । तथैवानुभूयते यथा श्रीहर्षस्य—

"अस्य क्षोणिपतेः परार्धपरया लक्ष्यीकृताः संख्यया
प्रज्ञाचक्षुरवेक्ष्यमाणतिमिरप्रख्याः किलाकीर्त्तयः।
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरा-
न्मूकानां प्रकरेण कूर्मरमणीदुग्धोदधे रोधसि॥

इति नैषधीयचरितीयं पद्यरत्नम्। न चेदं न काव्यम्, नैषधस्या-काव्यत्वे काव्यत्वस्य निर्विषयतायाः प्रसक्तिसंभवात्। काव्यप्रकाश-कृतापि पंचम उल्लासे यत्राभिधातो व्यंजनाया भेदः प्रतिपाद्यते, तत्र पदैकदेशादीनां नेत्रत्रिभागावलोकनादीनामपि वा व्यंजकत्वं ततश्च काव्यत्वं प्रदर्शितमेव। तेनात्र कर्णपूरपद्ये काव्यत्वस्वीकारे संप्रदायहानि-रपि न संभाव्यते।

कर्णपूरस्य काव्यलक्षण एकोऽन्योपि विशेषो दृश्यते। नव्यन्यायेन कारणकरणयोर्मध्ये भेदं कृत्वा छिदिक्रियांप्रति कुठारादीनां करणत्वं व्यापारस्य कारणत्वं घोषितम्। तमेवामुं भेदमाश्रित्य पंडितराजादिभिः काव्यप्रकाश-कृदाद्यभिमतं काव्यघटनानुकूलशब्दार्थोपस्थितिजनकस्य संस्कारविशेषस्य प्रतिभात्वं काव्यकरणत्वं वा अमत्वा तादृशसंस्कारविशेषजनितस्यो-पस्थितिपरपर्यायस्य शब्दार्थोभयस्मरणस्यैव प्रतिभात्वं काव्यकारणत्वं चाभ्युपागामि—"तस्य च कारणं कविगता केवला प्रतिभा। सा च काव्यघटनानुकूलशब्दार्थोपस्थितिः तस्याश्च कारणं क्वचित् जन्मान्तरी-यमदृष्टम्। क्वचिच्च विलक्षणव्युत्पत्त्यभ्यासौ"। अत्रेदं स्पष्टं यत् मम्मटेन अदृष्टापरपर्यायस्य संस्कारविशेषस्य शक्त्याख्यस्य काव्यकार-णत्वं मतं तस्यैव च पंडितराजेन काव्यकारण-कारणत्वेन काव्यकरणत्वं प्रत्यपादि। हृद्यमेव च तत्। अत्र काव्यलक्षणे कर्णपूरो यदि शब्दार्थयोः काव्यत्वममत्वा तन्निष्ठाया रचनायाः काव्यत्वं मनुते तर्हि तदपि पूर्वोक्ते-नैव करणकारणभेदप्रस्तावेन युक्तियुक्तमेव सिद्ध्यति। तथाहि दोषा-भावगुणालंकारैः शब्दार्थयोः शोभाविशेषो जन्यते। तया च शोभया तत्र काव्यत्वम्। "रसाद्यनुगुणः प्रकृष्टो न्यासः अनुप्रासः" इति अनुप्रासं व्युत्पादयता काव्यप्रकाशकृतैव स्वयं शोभाकर्तृत्वेनालंकारत्वस्य प्राच सिद्धान्तः स्वीकृत एव। किंच—

"उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्। हारादिवदलंकाराः"
इति प्रतिपादयन् मम्मटः तथैव अलंकाराणामपि सौन्दर्यजनकतयैवा-

लंकारत्वं व्यंजयति यथा ध्वनिकारिकायां तत्रभवान् ध्वनिकारः अंगाश्रितास्त्वलंकारा मन्तव्याः कटकादिवत्" इति।

शृंगारस्यांगिनो यत्नादेकरूपानुबन्धवान्
सर्वेष्वेव प्रभेदेषु नानुप्रासः प्रकाशकः। "इत्यारभ्य

किन्तु रूपकादेरलंकारस्य येयं व्यंजकत्वे रसादिविषये लक्षणादिक् दर्शिता तामनुसरन् स्वयं चान्यल्लक्षणमुत्प्रेक्षणमाणो यद्यलक्ष्यक्रमप्रतिभं ध्वनेरात्मानमुपनिबध्नाति सुकविः महाहितचेतास्तदा तस्यात्मलाभो भवति महीयान्" इति

सुदीर्घं संदर्भं यावत्। एवमलंकारादिभिः शब्दार्थयोः शोभा जन्यते तया तत्रैव चमत्कारित्वं जन्यते। तेन च तत्रैव काव्यत्वम् इति कारणक्रमे सति दोषाभावादीनां काव्यत्वे कारणत्वं विभाव्य यदि चमत्कारस्य काव्यत्वे कारणत्वं कर्णपूरेण मतं तर्हि तत् तर्कसंगतमेव। एतेन पंडितराजो जगन्नाथोऽप्यत्र स्थूलवादी यत्रासौ रमणीयतामर्थविशेषणतया निवेश्य तस्याः काव्यत्वे साक्षात्कारणत्वं निर्वोढुं न शक्नोति।

काव्यलक्षणप्रस्तावे निर्मितिपदमपि कर्णपूरस्य काव्यप्रकाशकर्तुः "नियतिकृतेति" मंगलपद्ये "निर्मितिमाधती भारती कवेर्जयति" इत्येवं समापतितस्य निर्मितिपदस्य प्रकाशे विचारणीयं भवति। काव्यप्रकाशकृता हि मंगलपद्ये समुचितेष्टदेवतायाः परामर्शव्याजेन कवितायाः संपूर्णमपि व्यक्तित्वं सूत्रितमस्ति। तस्य हि मंगलपद्यं वस्तुतः काव्यप्रकाशस्य सारसंक्षेपोऽस्ति। तत्र भारतीपदमपि वर्त्तते एव कविपदमपि च तत्र कृतास्पदमस्त्येव। ततः "कविवाङ्निर्मितिः काव्यम्" इति लक्षणमुद्धर्तुं शक्यत एव। पूर्वोद्धृतं लोकोत्तरचमत्कारवर्णने—त्यादिकं वचनं कर्णपूरेण प्रसंगेनोद्धृत्य खण्डितमस्ति। तेन कदाचित् कर्णपूरः काव्यलक्षणाय मम्मटस्य "नियतिकृते"—त्यादिकं मंगलपद्यमेवाशिश्रिये यद्यपि स मंगलमिदमत्र स्मरति न।

काव्यं सामान्यतो लक्षयित्वा तस्य भेदकरणेऽपि कर्णपूरस्य नितरां वैचित्र्यं प्रतीयते। स हि पूर्वं काव्यस्य त्रैविध्यमेव प्रतिपादयति—उत्तमं मध्यमम्, अधमं ध्वनिगुणीभूतव्यंग्यम्, चित्रं वा। पश्चात् उत्तमस्य उत्तमोत्तमताम्, मध्यमस्य उत्तमताम्, अधमस्य च मध्यमतामपि प्रदर्शयति। एषु च सर्वेष्वपि भेदेषु व्यंग्यार्थस्य सवैलक्षण्यमस्तित्वमेव

कारणतयोपादत्ते। तन्मते सर्वेष्वपि भेदेषु व्यंग्येन निर्व्यभिचारमवस्थातव्यमेव कामं तत्र सर्वत्र चमत्कारो न स्यात्।

अत्रेदमवधेयं यत् उत्तमोत्तमनामक एको भेदः पण्डितराजेनापि रसगंगाधरे साधितः। किन्तु कर्णपूरदर्शित उत्तमोत्तमभेदस्ततो नितरां भिद्यते। पण्डितराजस्य तु स एव काव्यभेदस्तत्तया मतो यो मम्मटस्य ध्वनितया उत्तमत्वेन मतोऽस्ति। तमिमं भेदं कर्णपूरो मम्मट इवैव उत्तममेव मनुते, उत्तमोत्तमत्वं स तत्र साधयति। यत्र एकस्मिन् ध्वनौ सति तद्भिन्ना अन्येऽपि ध्वनयस्तत एव काव्याद् उन्मिषन्तोनुभूयन्ते। मम्मटस्तदपि काव्यमुत्तममेव मनुते, तत्र ध्वनिसंख्याया भेदकत्वं नाभ्युपैति। एवमेव पंडितराजोऽपि सत्स्वप्यनेकेषु ध्वनिषु काव्यस्यैकमात्रध्वनियुक्तात् काव्याद् भिन्नत्वं न मनुते। जगन्नाथेन काव्यस्योत्तमोत्तमतायै ध्वनिसद्भाव एवैकः कारणतया प्रदर्शितः। कर्णपूरेण पुनः ध्वनिना सह शब्दार्थवैचित्र्यमपि। तन्मते यदि कस्मिंश्चित् काव्ये केवलं एक एव ध्वनिः स्यात्। किन्तु यदि तत्र शब्दार्थचमत्कारोऽपि कृतपदोऽनुभूयते तर्हि तदपि काव्यमुत्तमोत्तमं भवति। तदर्थमसौ निम्नलिखितं पद्यमुदाहरति—

"नवजलधरधामा कोटिकामावतारः
प्रणयरसयशोरः श्रीयशोदाकुमारः।
अरुणदरुणदीर्घापांगभंग्या कुरंगी-
रिव निखिलकृशांगी रङ्गिणि[1] क्वासि यासि" ॥

अत्रालंकारच्छटया रसप्रवाहो विहन्यमानोनुभूयते चेत् इत इदमेकं तत्त्वमवश्यमेव प्रतिपादितं भवति यद् ध्वनिसद्भावे शब्दार्थालंकारच्छटायां सत्यां कश्चनापूर्वो माधुर्योल्लासोनुभूयते। इदं च "मुखं विकसितस्मितं वशितवक्रिम-प्रेक्षितम्"—इत्यादेः काव्यस्य

"विपरीतरते लक्ष्मीब्रह्माणं दृष्ट्वा नाभिकमलस्थम्।
हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति ॥"

इत्यादेः अलंकारादिशून्यात् काव्यात् प्रतिपद्यमानं चमत्कारभेदमाश्रित्य सुखमेवोपगन्तुं शक्यते। सरसेष्वपि काव्येषु अंगनिष्ठेन वैचित्र्येण जायमानस्योत्कर्षस्य स्वीकारः कुंकुमपीतिकाया दृष्टान्तेन श्रीमता अभिनवगुप्ताचार्येणापि कृत एव। अत एव च मम्मटाचार्योऽपि निरलंकारत्वस्य क्वाचित्कत्वं दर्शयन्। 'सर्वत्र सालंकारौ क्वचित् स्फुटा-

लंकारविरहेपि न काव्यत्वक्षतिः" इति सरसेपि काव्ये अलंकाराणाम् अस्तित्वे दर्शितममत्वो दृश्यते। तेन हि स्थितमेतत् यत् सरसेष्वपि काव्येषु अलंकारयोगादुपजायत एव कोऽपि शोभाविशेषः। तेन च काव्यस्य द्विविधचमत्कारप्रवर्षणेन केवलैकविधचमत्कारसद्भावापेक्षया प्रकर्षः सर्वथा मान्य एव। अत एवोच्यते "केवलोपि सुभगो नवाम्बुदः किं पुनस्त्रिदशचापलांछितः"। वस्तुतो रंजन-व्यंजनादिषु परभागयोग एव सुमनसां रुचितो भवति। अत एव चोच्यते

"पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य॥"

सोयं द्वितीयो भेदः पंडितराजस्याविदतः। न चासौ तस्यानभिमतः तस्य स्वीयेषु प्रायः सर्वविधेषु काव्येषु शब्दार्थालंकारच्छटाया भूम्ना दृश्यमानत्वात्। ध्वनिसद्भावमात्रेण संतुष्टश्चेदसौ कथमिव समुचित-ललिते शब्दार्थसंनिवेशे दर्शितादरः स्यात्।

"शयिता सविधेप्यनीश्वरा सफलीकर्तुमहो मनोरथान्।
दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते॥"

इत्यस्मिन् तस्य ध्वनिपद्य एव शब्दच्छटायां दृश्यमानो बहुमानोऽभिप्रायमिममेतदभिमतं साधयितुमलम्।

कर्णपूरस्य यद् काव्यमुत्तमतयाभिमतं तद् हि मम्मटस्याप्युत्तमतयैव मतमस्ति। पंडितराजस्तु तदेवोत्तमोत्तमं मनुते।

कर्णपूरो हि यत् काव्यं मध्यमं मनुते मम्मटस्यापि तत् तथाविधमेव मतमस्ति। पंडितराजस्य पुनः तत् उत्तमतया मतं भवति। अयमत्र विशेषो यदिदं मध्यममपि काव्यम् कर्णपूरमते उत्तमतामंचति, यदा तत्र शब्दार्थवैचित्र्यमपि समायोज्यते।

[१] "उत्तमस्य पुरुषस्य वनान्तः सत्यमालि कुसुमाय गतासीः।
आययुर्मधुकरास्तव पश्चाद् दुःशकः परिमलो हि वरीतुम्॥"

इति पद्यं मध्यमतया,

"शिक्षितानि सुहृदा न गृहीतान्युक्षितासि निजगर्वरसेन।
दीक्षितः कृतवधूवधयागे वीक्षितः सखि स नन्दकुमारः॥

इति च पद्यं मध्यममपि सत् शब्दार्थवैचित्र्येणोत्तमतया येन

---

१—उत्तमः पुरुषः उत्कृष्टः पुन्नागवृक्षः, पुरुषोत्तमः श्रीकृष्णश्च। श्रीकृष्णस्य स्फुटमवबोधात् व्यंग्यार्थस्य गुणीभूतत्वेन काव्यस्यास्य मध्यमत्वम्।

चमत्कारविशेषेणासौ प्रतिपादयति स हि समेषामेवानुभविकः। पंडितराजो भेदममुं न परिचिनोति।

अवरकाव्यस्य विषये कर्णपूरस्य मतं किंचिद्भिन्नमस्ति। स हि व्यंग्यस्य निष्पन्दत्वं तस्य मूलतया प्रतिपादयति शब्दार्थवैचित्र्यस्य च सद्भावं तत्सहकारितया। अत्रापि चायं विशेषो यद् यदि शब्दः अर्थश्चेत्युभयस्यापि वैचित्र्यं यौगपद्येन निष्पन्दव्यंग्यसहयोगितामंचति तदा कर्णपूरमते तत् काव्यं अवरतां विहाय मध्यमतामासादयति। यदि च तादृशनिष्पन्दव्यंग्यसहकृतं शब्दार्थान्तरमात्रस्य वैचित्र्यमनुभूयते तर्हि तत् काव्यं मध्यममभूत्वा अवरमेव तिष्ठति। उदाहरणान्यपि तेनात्रैवं दत्तानि—

अवरस्य—

"ऊर्ज्जत्स्फूर्ज्जै-र्गर्जनै-र्वारिवाहाः प्रोद्यद्विद्युद्दाम-विद्योतिताशाः।
अद्रावद्रौ विद्रुता द्रावयन्ते दन्तिभ्रान्त्या सिंहसंघप्रकोपान्॥"

अवरत्वात् मध्यमतां गतस्य च—

[२]"काननं जयति यत्र सदा सत् का न नन्दति यदेत्य सुखश्रीः।
का न नन्दतनये प्रणयोत्का काऽऽननं धयति या न हि तस्य॥"

अत्रानयोर्भेदयोः शब्दार्थालंकारच्छटया व्यंग्यार्थवैचित्र्यं माषराशि-प्रविष्टं तिलमिव प्रतिपदविषयतामंचतीति स्थितिर्नास्ति तथापि पुष्पापीड-तिरोहितं वरस्येव मुखं गौणश्रीकमुपजायते। श्रियो विलोपस्तु न भवति। अतो निष्पन्दत्वमस्यात्रोचितमेव। पूर्वत्र पद्ये केवलः शब्दालंकारोऽस्ति परत्र पद्ये तु शब्दालंकारेण सह काकूक्त्या पर्यायभंग्यपि दृश्यते। ततः शब्दार्थोभयालंकारवैशिष्ट्येन अवरमपीदं काव्यं मध्यमतामश्नाति। अयमपि मध्यमत्वप्रकारः पंडितराजाद्यनवगतः। तदत्र कर्णपूरमम्मट-पंडितराजानां काव्यभेदप्रकारेण यो यो भेदोऽस्ति स निम्नांकितेन तालिकया विशदः—

---

२—यत्र-वृन्दावनधाम्नि सत् काननं जयति।

| कर्णपूरः | मम्मटः | पंडितराजः |
|---|---|---|
| १—उत्तमोत्तमम् | उत्तमम् | उत्तमोत्तमम् |
| २—उत्तमम् | उत्तमम् | उत्तमोत्तमम् |
| ३—मध्यमम् | मध्यमम् | उत्तमम् |
| ४—अवरे अर्थचित्रम् | अधमम् | मध्यमम् |
| शब्दचित्रम् | अधमम् | अधमम् |
| ५—शब्दार्थोभयवैचित्र्येण जातम् उत्तमस्योत्तमोत्तमत्वम् | ध्वनिप्राधान्ये उत्तमत्वमेव वैपरीत्ये तु मध्यमत्वम् | मम्मटवदेव मध्यमत्वम् उत्तमोत्तमत्वं वा |
| ६—शब्दार्थोभयवैचित्र्येण मध्यमस्योत्तमत्वम् | मध्यमत्वमेव | उत्तमत्वमात्रम् |
| ७—शब्दार्थोभयवैचित्र्येण अवरस्य मध्यमत्वम् | अवरत्वावरत्वमेव | मध्यमत्वावरत्वान्यतरत्वम् |

अत्र प्रथमस्य उत्तमोत्तमनामकस्य भेदस्य विषये वयमित्थं चिन्तयामो यद् यदा हि ध्वन्यन्तराणामनुभवो भवति तदा तस्य भेदस्य संकरालंकारस्येव पार्थक्यं सहृदयैः करणीयमेव। वैपरीत्ये तु संकरस्यापि पृथगलंकारता प्रत्याख्येयकोटौ निक्षेप्या। यथा हि ध्वनिगुणीभूतव्यंग्ययोः अर्थचित्रशब्दचित्रयोर्वा तनीयांसं चमत्कारभेदमादाय सहृदयशिरोमणिभिः पार्थक्यं व्यवस्थापि तदा ध्वनौ ध्वन्यन्तरोद्गारे चमत्कारभेदमपश्यतां तेषामभेदव्यवस्था नूनं विचार्यैव।

काव्यभेदवदेवान्येऽपि विशेषाः कर्णपूरस्य अलंकारकौस्तुभे लभ्यन्ते। तत्र हि भावयित्र्याः प्रतिभायाः काव्यविधातर्यपि स्वीकारोऽस्ति। अथर्त् कर्णपूरमते कवौ भावकत्वमपि भवति। मम्मटादीनां तु तदनभिमतम्। ण्डितराजो 'गतोस्तमर्कः' इत्यादीनामपि वाक्यानां काव्यत्वमुरीकरोति; मम्मटश्च 'मृगनयना'—प्रभृतिषु पदेषु त्रिलुप्तात्वमुपमायां साधयन् काव्यत्वमूरीकरोति। कर्णपूरः पुनः 'मृगनयना'-प्रभृतिष्वपि पदेषु काव्यत्वं नाभ्युपैति किं पुनः 'गतोस्तमर्क' इत्यादिषु। स हि असाधारणं चमत्कारं काव्यत्वबीजं मनुते। न च स मृगनयनेत्यादिषु बाह्यचमत्कारप्रधानेषु वाक्येष्वनुभूयते ततः तन्मते स्थितमेवाकाव्यत्वं तेषाम्। रतिः प्रीति-मैत्री-सौहार्द-भावरूपता कैस्कैर्विशेषैरश्नुत इति स विशदं व्याकरोति।

मनोविज्ञानशास्त्रमपि तेन न दुष्यति। रसो वस्तुत एकरूप एव भवति, अनेकता भावा एव अश्नुवते। एतान् एवंविधांश्चान्यानपि विषयान् कर्णपूरो निजे अलंकारकौस्तुभे पाण्डित्येन विशदयंल्लक्ष्यते। ध्वनिकारादिप्रतिपादितानपि दुरूहान् विषयानसौ स्पष्टतयति। सर्वथा ह्यसौ षोडशस्य शतकस्यैको महान् अलंकारचिन्तकोऽस्ति। तस्यास्यालंकार-ग्रन्थस्य पर्यवेक्षणेन तत्समये प्रचलितानां विषयाणां परिचयो लभ्यते ये हि जगन्नाथादिषु सहसा लक्षिताः सहृदयांश्चकितान् विदधते। वस्तुतः वंगेषु तदानीं गोस्वामिप्रभृतिभिर्या भक्तिधारा प्रवाहिता, तत्र एवंविधा इमे स्वतन्त्राः समीक्षकाः संस्कृतकाव्यशास्त्रेतिहासे यवनाक्रान्तिकालेऽपि देशेऽस्मिन् संजाताः। एषामादरेणानुशीलनमस्माकं परमो धर्मः।

———

# अरविन्दस्य वेदभाष्यम्

श्रीजगन्नाथवेदालङ्कारः

वेदो हि न केवलं वैदिकवाङ्मयस्य किन्तु अस्माकं सकलस्य लोक-साहित्यस्यापि मूलोद्गमतया आद्रियते। ईदृशस्य अस्माकं सम्पूर्ण-साहित्यमूलभूतस्य वेदस्य वास्तविकमर्मप्रकाशनार्थं आधुनिकयुगे श्रीअर-विन्देन बृहदवदानं अनुष्ठितम्। 'On the Veda' नामके स्वग्रन्थे तेन वेदविषयकाः स्वकीया विचाराः सिद्धान्ताश्च विस्तरेण प्रस्थापिताः, तदनुसारिणी व्याख्यापद्धतिश्च सुस्पष्टतया निरूपिता। ततश्च तेन Selected Hymns, Hymns of the Atris, Hymns to the Mystic Fire' इत्यादिशीर्षकविस्तृतलेखमालारूपेण वेदस्य आध्या-त्मिकभाष्यप्रणयनमपि आरब्धमासीत्। ता लेखमाला अधुना ग्रन्थरूपे प्रकाशिताः। येषु ग्रन्थेषु तेन वेदस्य सहस्रशः मन्त्राणामनुवादः विस्तृत-व्याख्या वा कृता वर्तते। पश्चात् यस्य दिव्यदृष्ट्या व्याख्यारीत्या च प्रेरितः ब्रह्मश्रीकपालिशास्त्री संस्कृतभाषया शास्त्रीयरीत्या ऋग्भाष्य-भूमिकां ऋग्वेदस्य प्रथमाष्टकभाष्यं च प्रणीतवान्। अनया दृष्ट्या श्रीअरविन्दस्य वेदानुसन्धानं संस्कृतसाहित्यक्षेत्रे आधुनिकप्रगतिषु अग्रगण्यम्। अतएवाहमाशासे यत् श्रीअरविन्देन वेदस्य नूतनव्याख्यां कृत्वा, अपि च कपालिशास्त्रिसदृशपण्डितेभ्यः वेदस्य नूतनभाष्य-रचनायाः प्रेरणां दत्त्वा संस्कृतसाहित्यप्रगतौ यत् योगदानं कृतं तस्य सम्यङ्मूल्याङ्कनं करिष्यन्ति भवन्तः सर्वेऽपि अत्रोपस्थिताः विद्वांसः। एतावदुक्त्वा अहं तस्य वैदिकगवेषणकर्म किञ्चित् कीर्तयामि।

वेदस्य मूलभावैः सह श्रीअरविन्दस्य प्रथमपरिचयः कथं सञ्जात इत्यस्मिन् विषये स 'On the Veda' नामके स्वग्रन्थे एकं रोचकं स्वानुभवं वर्णयति। तेन ज्ञायते यद् वेदाध्ययनस्य आरम्भात् प्रागेव तस्य वैदिकदेवतानां साक्षात्कारः भवति स्म। तेषां प्रतीकात्मकस्वरूपं च स्फुरति स्म। स लिखति—यदाऽहं भारतीययोगविधिना आत्मविकासार्थं यतमान आसम्, तदा मम मनसि प्रतीकानां एका शृङ्खला स्वत एव,

अन्तरत एव उद्भवितुमारब्धा। तानि प्रतीकानि मम आध्यात्मिकानुभवैः सह संबद्धानि आसन्। ते अनुभवाः प्रतीकानां ताः स्फुरणाश्च मम योगसाधनासमये नियमतः भवन्ति स्म। तेष्वनुभवेषु एकदा इला-सरस्वतीसरमानामिकानां देवीनां अर्थात् स्त्रीलिङ्गीयदिव्यशक्तीनां प्रतीकानि अपि मत्समक्षं प्रकटीभूतानि। ताः शक्तयः अन्तर्ज्ञानमयबुद्धेः ( Intuitive Reason ) तिस्रः शक्तीः द्योतयन्ति स्म। अर्थात् ताः स्वतः प्रकाशस्य अन्तःप्रेरणाय अन्तर्ज्ञानस्य च शक्तयः आसन् या आङ्गलभाषायां Revelation, Inspiration Intuition इति शब्दैः परिचीयन्ते। इला, सरस्वती, सरमा इत्यासु प्रथमे द्वे अर्थात् इला सरस्वती च वैदिकदेव्योः नाम्नी इत्यपि अहं तदा सम्यक् न अजानाम्। अहन्तु प्रचलितहिन्दुधर्मानुसारं प्राचीनपौराणिककथानुसारं वा सरस्वतीं विद्याया देवीं एव अजानाम् इलां च चन्द्रवंशस्य मातरम्। परं सरमया सह मम पर्याप्तपरिचय आसीत्। सरमा देवशुनी स्वर्गस्य सारमेयी वा मन्यते इति मया ज्ञायते स्म। एवं सत्यपि सरमाया या आकृतिः आध्यात्मिकानुभूतौ मम अन्तःकरणे नामसहितं स्फुरिता तया सह स्वर्गस्य सारमेय्याः सम्बन्धं अवबोद्धुं अहं नाशकम्। अहं सरमां ग्रीकदेवी (Helen) वत् स्थूलोषायाः रूपकस्य द्योतिकां मन्ये।

किन्तु पश्चात् प्रत्यक्षाऽन्तरनुभूतिबलेन मया स्पष्टतयाऽनुभूतं यत् इला सरस्वती सरमा दक्षिणा चेति चतस्रो देव्यः आध्यात्मिकप्रतीकान्येव। इमा ऋतस्य सत्यचेतनाया वा चतस्रः शक्तीः द्योतयन्ति। या चेतना उपनिषत्सु विज्ञानमयकोषत्वेन वर्णिता तस्याः एव इमा चतस्रः शक्तयः। तत्र इला सत्यदर्शनं दिव्यस्वतःप्रकाशं वा सूचयति, सरस्वती सत्यश्रवणं दिव्यां अन्तःप्रेरणां दिव्यवाणीं वा द्योतयति। सरमा दिव्यं अन्तर्ज्ञानं दक्षिणा च अन्तर्ज्ञानमयविवेकं बोधयति। प्राचीनपरिभाषया इमाः क्रमशः दृष्टिः, श्रुतिः, स्मृतिः, स्मार्त्तविवेक इत्येवं अभिधीयन्ते। आसु इलासरस्वत्योः उल्लेखः एकयाऽन्यदेव्या महीनामिकया सह एकस्मिन् प्रसिद्धमन्त्रे दृश्यते—इला-सरस्वती मही तिस्रो देवीर्मयोभुवः। बर्हिः सीदन्त्वस्रिधः॥ ऋ० १.१३-९

इत्थमस्माभिः दृष्टं यत् वेदानुशीलनस्य प्रारम्भादपि प्राक् श्रीअरविन्दस्य वैदिकदेवतानां साक्षात्कारः संजातः, तासामाध्यात्मिकप्रतीकात्मकस्वरूपस्य स्फुरणा च संवृत्ता। देवानामयं साक्षात्कारः, तेषां प्रतीका-

त्मकस्वरूपस्य इयं स्फुरणा च तस्य तथैव संजाता यथा सृष्टेरादिकाले अग्निः, वायुः, आदित्यः, अङ्गिराः इति नामकानां महर्षीणामन्तःकरणे ऋग्वेद-यजुर्वेद-सामवेदाथर्ववेदानां मन्त्राः स्फुरिताः। तेषां प्रतीकात्मका अर्थाश्च प्रतिभाताः। अतः श्रीअरविन्दमहर्षिणा अन्तरनुभूतिबलेन वेदस्य यो रहस्यार्थ आविष्कृतः, वेदव्याख्याया या पद्धतिश्च प्रवर्तिता सा स्वतःप्रमाणा, निर्भ्रान्ता, परममान्या च इत्यत्र नास्ति ये स्वल्पोऽपि सन्देहः। अधुना प्रश्नोऽयं जागर्ति यत् कोऽसौ रहस्यार्थः यस्तेन आविष्कृतः का च तस्य भाष्यपद्धतिः। तत् सम्प्रति पश्यामः।

प्रत्येकं वेदमन्त्रस्य त्रिविधः अर्थः सम्भवति—आध्यात्मिकः, आधिभौतिकः, आधिदैविकश्चेति। अयं परम्परागतः सिद्धान्तः। एषु अर्थेषु सम्भवत्स्वपि सर्वासां ऋचां मुख्यः प्रतिपाद्योऽर्थः आध्यात्मिक एव इति श्रीमहर्षेररविन्दस्य मतम्। किन्तु वेदानां यः कोऽपि अर्थः, या कापि व्याख्या क्रियेत, तदर्थं वैदिकदेवतानां स्वरूपज्ञानमपरिहार्यम्। वैदिकदेवतानां किं स्वरूपमित्यत्र श्रीअरविन्दपादा एवमाहुः वेदमन्त्राणां बाह्ये अधिभौतिकेऽर्थे देवता भौतिकप्रकृतेः सार्वभौमशक्तयः सन्ति ताश्च मूर्त्तिमत्यः, पृथक्पृथग्व्यक्तित्वशालिन्यश्च। अर्थात् अस्य स्थूलाग्नेः पृष्ठतः अस्ति कापि मूर्तिमती विशिष्टव्यक्तित्ववती च विराड् बाह्यसूर्यस्य पृष्ठतः अस्ति काचित् मूर्तिमती विशिष्टव्यक्तित्वती च विराट् प्रकाशशक्तिः। किन्तु वेदस्य अन्तरर्थे देवताः प्रकृतेः सार्वभौमा आन्तरिकशक्तयः, विराट्संकल्पशक्तिमनःशक्तिप्रभृतयः सन्ति। आसां दिव्यविराडन्तःशक्तीनां साहाय्येनैव प्रकृतिः अस्माकं आभ्यन्तरव्यापारेषु क्रियां करोति।

आसां देवतानां आध्यात्मिकं स्वरूपं कार्यव्यापारादिकं च श्रीअरविन्देन अन्तर्दर्शनद्वारा साक्षात्कृत्य Selected Hymns नामके ग्रन्थे विस्तरेण निरूपितम्। तदनुसारं अग्निः भागवतसंकल्पशक्तेर्विराटसंकल्पशक्तेर्वाऽधिष्ठातृदेवः अर्थात् He is the lord of will, the Divine will force or Cosmic will-force. एवमेव इन्द्रः दिव्यमनसोऽधिपतिरधिष्ठाता वा, स दिव्यप्रकाशस्य दाता, मरुतः तस्य इन्द्रस्य शक्तयः, अर्थाद् दिव्यमनसः शक्तयो विचारशक्तयो वा, सूर्यो दिव्यप्रकाशस्याधिपतिः दिव्यसत्यस्य सूर्यः उषा दिव्यज्योतिषः दिव्यज्ञानस्य दिव्यचैतन्यनस्य वा प्रभातस्वरूपा, अश्विनौ

आनन्दस्य अधिपतिः, सोमः आनन्दस्यामृतत्वस्य च अधिष्ठातृदेव इत्यादि।

देवतानामस्य आध्यात्मिकस्वरूपस्य ज्ञानं वेदस्य आन्तरिकार्थविवृत्तये अपरिहार्यम्। एवमेव वेदस्य रहस्यार्थोद्‌घाटनार्थं तस्य कुंचिकाभूतानां प्रधानशब्दानां प्रतीकात्मकः अर्थोऽपि ज्ञातव्यः मनसि निधातव्यश्च, यतो हि वेदस्य शब्दा न केवलं वाचकाः, किन्तु लाक्षणिकाः सांकेतिकाः प्रतीकात्मकाश्च[1], येषां गूढसंकेतार्थस्य ज्ञानं विना वेदस्य यथार्थरहस्यं

[1]—ईश-छान्दोग्य-बृहदारण्यकादिषु प्राचीनोपनिषत्स्वपि वेदस्य कतिपय-पदानि देवतानामानि च तस्मिन्नेव प्रतीकात्मकार्थे गृहीतानि विवृतानि च यस्मिँस्तानि वेदे प्रयुक्तानि।

तद्यथा, "एकस्मिन् वेदमंत्रे (ऋ० ५।६२।१) इदमाख्यातम्—'अस्ति सत्येन समाच्छन्नं सत्यमेकं यत्र ते सूर्यस्याश्वान् विमुञ्चन्ति। दश शतानि एकत्र तस्थुः, 'तदेकम्' आसीत्। शरीरदेवेषु महत्तमम् (श्रेष्ठं, सर्वाधिकमहिमशालिनम्) अहमपश्यम्।' उपनिषदृषिरिमं विचारं रहस्यमयवचनं वा परवर्तिन्यां निजशैल्यां कथमनुवदतीति दृश्यतामधुना। सूर्यात्मकं केन्द्रीयप्रतीकं तावत् स यथावत् सुरक्षति, किन्तु मन्त्रार्थे काञ्चिदपि गोपनीयतां नाश्रयति। इदमस्ति तद् ईशोपनिषदो व्याख्यावचनम्—'सत्यस्य मुखं हिरण्मयपात्रेणावृतम्। हे पूषन्, तत् त्वमपवारय सत्यधर्मस्य सन्दर्शनार्थम्। हे पूषन् (परिपोषक), एकर्षे, हे यम, हे सूर्य, हे प्रजापतिपुत्र, स्वरश्मीन् व्यवस्थापय समाहरस्व च, यत्ते तेजस्तव सुन्दरतमं (कल्याणतमं) रूपं तदहं पश्यामि। योऽसौ पुरुषः सोऽहमस्मि'।

अत्र 'हिरण्मयपात्रेण' स एवार्थः 'अवरकोटिकाऽवरकसत्य'—रूपो विवक्षितो यो वेदमंत्रे 'ऋतेन' इति पदेन प्रोक्तः।

'देवानां शरीरेषु श्रेष्ठम्' इति वेदवचनं 'सूर्यस्य कल्याणतमं रूपम्' इत्युपनिषद् वचनेन समानार्थकम्।......'सोऽहमस्मीत्युपनिषन्महावाक्य-ऋग्वेदमन्त्रस्य 'तदेकम्' इत्यनेन संवदति।" (Fore word to 'Hymns to the Mystic Fire Page, 18)

एवमस्माभिर्दृष्टं यद् वेदे उपनिषत्सु चोभयत्रापि सूर्यः परमसत्यस्य परमज्ञानस्य चाधिदेवता, तस्य रश्मयश्च तत्परमसत्य-ज्ञान-समुद्भवं ज्योतिः।

इत्थमेव "ओम् उद्गाता" इत्यादिसन्दर्भेषूपनिषदः होतृत्विगध्वर्यूद्‌-गात्रादीनां प्रतीकात्मकं स्वरूपं निर्दिशन्ति वेदवत् इत्यलं पल्लवितेन।

ज्ञातुमशक्यम्। अतोऽधुनाहं वेदस्य कांश्चित् प्रतीकात्मकशब्दान् उदाहरामि। वेदे गौः, अश्वः, घृतम्, ऋतम, वनम्, आपः, धीः, रत्नम्, रयिः, राधः, क्रतुः, श्रवः, कविः इत्यादयो बहवः प्रतीकात्मकाः शब्दाः दृश्यन्ते। श्रीअरविन्दचरणा अन्तःसाक्षात्कारबलेन वेदस्य अन्तः साक्ष्येण च आहुः, यद् आध्यात्मिकार्थे 'गो' पदं सर्वत्र दिव्यप्रकाशस्य प्रतीकम्। सायणोऽपि क्वचित् क्वचित् अस्य शब्दस्य 'प्रकाशः' 'प्रकाश-रश्मिः' इति अर्थं करोति। किन्तु सायणस्य भाष्ये सत्स्वपि कतिपय-गुणेष्विदमेकं महद् दूषणं यत् स एकस्यैव शब्दस्य विभिन्नस्थलेषु स्वेच्छानुसारं विभिन्नार्थान् करोति। सर्वत्र कर्मकाण्डपरकार्था-नुसन्धानबद्धपरिकरः पूर्वग्रहदूषितश्चासौ शब्दस्यार्थं विपरि-वर्तयति निरंकुशतया। तद्यथा, एकस्यैव ऋतशब्दस्य स एकत्र जलम्, अन्यत्र यज्ञः, अपरत्र अन्नम्, इतरत्र सत्यम् क्वचिच्च गतम् इति अर्थं करोति।[१] तत्र श्रीअरविन्दः कथयति यत् यदि अस्माभिः वेदस्य कोऽपि संगतः प्रामाणिकश्च अर्थः करणीयः तर्हि वेदस्य विशिष्ट-पदानां सुनिश्चिताः अर्था अवश्यं निर्धारणीयाः। अन्यथा वेदार्थविषये दुर्व्यवस्थाऽनवस्था वा सदैव स्थास्यति।

वेदस्य सांकेतिकपदेषु गो शब्दस्यार्थोऽस्माभिर्निरूपितः। सम्प्रति अन्यान् कतिपयशब्दान् विचारयामः। यथा वेदे 'गो' शब्दः प्रकाशस्य प्रतीकं तथैव 'अश्वं' शब्दः शक्तेः। लोकेऽपि अश्वः शक्तेर्मापकः सूचकश्च स्वीक्रियते। अश्वशक्तिः ( Horse-Power ) इति पारिभाषिक-प्रयोगेणेदं विशदमेव यत् अश्वेन शक्तिर्मीयते सूच्यते च। वैदिककालेऽपि अश्व-शब्दः शक्तेः संकेतकत्वेन व्यवह्रियते स्म।

एवमेव 'घृतम्' वेदमन्त्रेषु मानसिकनिर्मलताया मनसो निर्मलप्रका-शस्य वा द्योतकम्। 'ऋतं' दिव्यसत्यस्य 'वनम्' च आनन्दस्य बोधकम्। आपः चिन्मयसत्तायाः वृष्टिधाराः, दिव्यसत्तायाः सत्यस्य चैतन्यस्य

---

१ — अनेकस्थलेषु तेनापि गो-ऋत घृतप्रभृतिपदानां प्रकाश-सत्य-दीप्त्यादि-रूप आध्यात्मिकार्थः शरणीकरणीयो भवति। तदेव प्रमाणयति यद् वेदमन्त्रे-ष्वस्ति किमपि निगूढं रहस्यतत्त्वम्। तच्च वैदिकपदानां सहजस्वाभाविकार्थ-स्वीकारेण स्वत एवानावृतं जायते। अपि च मन्त्रगतविशेषणपदैरन्यैश्च साभिप्रायैः पदविशेषैस्तदेव तत्त्वं स्पष्टतया संकेत्यते।

आनन्दस्य च दिव्यवृष्टिरेव। वेदे आपः, नद्यः, सिन्धवः, मातरः इत्यादिपदैः निर्दिष्टा तत्र तत्र। रत्नं, रयिः, राध इति शब्दा आनन्दैश्वर्यस्य बोधकाः। क्रतुः संकल्पस्य, श्रवः अन्तश्रवणस्य, अन्तःश्रुतज्ञानस्य च द्योतकः। कविशब्दः क्रान्तद्रष्टारम् ऋषिं वा संकेतयति गूढतया।

ईदृशैर्गूढसांकेतिकपदै रहस्यज्ञानप्रकाशनस्य इयं शैली प्राचीनकाले भारतवर्षे प्रचलिता आसीत्। तस्याः प्रयोजनं च अदीक्षितेभ्योऽनधिकारिभ्यो गुह्यज्ञानस्य निगूहनमेव। मिश्र-यूनानदेशयोरिव भारतेऽपि पुरा गुह्यविद्यायाः भूयान् प्रचारोऽवर्तत सर्वत्र। किन्तु पाश्चात्यविद्वांसः मिश्रदेशे यूनानदेशे च रहस्यविद्यायाः प्रसारं स्वीकुर्वन्तोऽपि भारतेऽस्या अस्तित्वमभ्युपगन्तुं नेच्छन्ति।

वेदस्य कतिपयविशेषशब्दानां ये अर्था मया निरूपितास्ते न कपोलकल्पिताः, प्रत्युत श्रीअरविन्दस्य अन्तरनुभवेन प्रमाणिताः। अथ च व्याकरणेन व्युत्पत्तिशास्त्रबलेन च सुदृढमुपपादयितुं शक्याः। यतो हि वेदस्य शब्दा यौगिका न तु रूढा योगरूढा वा। 'अनेकार्था हि धातवः' इति सायणस्य कथनेनाप्ययमेव सिद्धान्तः समर्थ्यते। श्रीमद्दयानन्दस्वामिनोऽपि वैदिकशब्दान् यौगिकान् मन्यन्ते। श्रीअरविन्दपादाश्च तेषां मतमनुमोदयन्त एवमाहुः—स्वामिदयानन्देनास्मभ्यं वेदार्थस्य कुंचिका प्रदत्ता। सा हि वैदिकपदानां यौगिकार्थकरणस्य कुंचिका। तया कुंचिकया अस्माभिः वेदानां सुप्तार्थस्य पिहितद्वाराणां समुद्घाटने सुमहत् साहाय्यं प्राप्यते।[1]

तदेवमस्माभिर्वेदस्य कतिपयकुंचिकाशब्दानां सांकेतिकार्थाः दृष्टाः। वैदिकदेवतानामाध्यात्मिकं स्वरूपं कार्यव्यापारादिकं च किंचिदालोचितम्।

---

1—In the matter of Vedic interpretation I am convinced that whatever may be final complete interpretation, Dayananda will be honoured as the first discoverer of the right clues...........He has found the keys of the door that time had elosed and rent asunder the seals of the imprisoned fountains, ( Bankim-Tilak-Dayananda, P. 60 ) It was the philological and etymological method by which he arrived at his results; especially in his dealings with the names of the godheads. ( Bankim–Tilak–Dayananda ) P. 57.

एतदुभयं मनसि निधाय यदा वेदः अनुशील्यते, तदा तस्य रहस्यार्थः स्वत एव विवृतो भवति। संप्रति अयं प्रश्न उपतिष्ठते यत् किं तद् रहस्यज्ञानं यदनयोर्द्वयोः साधनयोः साहाय्येन वेदे सम्प्राप्यते। तच्च-तुर्धा विभज्य वर्णयितुं शक्यम्। तस्य चत्वारि अंगानि तत्त्वानि वा सन्ति।[1]

(१) तत्र प्रथमं, वेदानां मन्त्रवर्णेषु इदमाम्नातम्—अस्त्येकं परमं सत्यं यदस्माकं बाह्यसत्तायाः सत्याद् गम्भीरतरं उच्चतरं च, अस्त्येकं ज्योतिः यत् मानवीयबुद्धेरालोकात् बृहत्तरम् ऊर्ध्वतरं स्वतः प्रकाशं च अस्ति च देवत्वममृतत्वं च यत् जीवेन गवेषणीयं लभ्यं च, लब्ध्वा च तस्मिन्नेव निवसनीयम्। एकस्य वेदमन्त्रस्योत्तरार्द्धे एतत् सर्वं सममेव निर्दिष्टम्। तत् शृण्वन्तु भवन्तः, 'यजन्त विश्वे देवत्वं नाम ऋतं सपन्तो अमृत-मेवैः'। अस्मिन् मन्त्रांशे तदेव ऋतं अर्थात् सत्यममृतत्वं च निर्दि-ष्टानि। अपि च 'सत्यं तदिन्द्रो दशभिर्दशग्वैः सूर्यं विवेद तमसि क्षियन्तम् ( ऋ० ३-३९-५ ), 'गूळ्हं ज्योतिः पितरो अन्वविन्दन् सत्य-मन्त्रा अजनयन्नुषासम्' (ऋ० ७.७६.४) इत्यादयो मन्त्रा अप्युदाहार्याः।

तस्य सत्यस्य ज्योतिषश्च, तयोर्देवत्वाऽमृतत्वयोश्च उपलब्धिः सत्यस्य पथा एव सम्भवति नान्यथा। एतदपि एकस्मिन् वेदमन्त्रे प्रति-पादितम् 'पन्था ऋतस्य साधु या। अदर्शि वि स्रुतिर्दिवः' ।। अत्र स एव पन्था वर्णितः। एतानि सत्यज्योतिरादीनि एषामधिष्ठानभूता दैवी शक्तिश्च मनुष्यस्य अन्तरे क्रियारतानि सन्ति। एषां स्तुतिः, तेषां दिव्य-दानानां कृपापरम्पराणां च स्तुतिरेव वेदमन्त्राणां प्रधानविषयः।

---

१—वेदो हि निखिलविद्यानिधानम्, अशेषज्ञानविज्ञाननिरूपकं शाश्वतिकम् अपौरुषेयञ्च शास्त्रम् इति प्राचीनतममहर्षिभ्य आरभ्य अर्वाचीनतम महर्षि श्रीमदरविन्दपर्यन्तं सर्वेषां ऋषीणां समानं मतम्। सर्वमपि ज्ञानं विज्ञानं वा बीजरूपेण वेदे वरीवर्ति इति श्रीदयानन्दस्वामिनां मतं श्रीअरविन्दचरणैः समर्थितं समुपबृंहितञ्च। वंकिम—तिलक—दयानन्दनाम्नि पुस्तके। तत्र तैरुक्तं यन्महर्षिदयानन्दस्य अस्मिन् विश्वासे न काप्यतिशयोक्तिः। प्रत्युत वेदविषये तेन इदं न्यूनोक्तिरेव कृता। इमं विश्वासं समर्थयितुञ्च श्रीमदरविन्देन प्रतिपादितं यद् वेदे भौतिकविज्ञानस्य सत्यानि तु बीजतः वर्तन्त एव, किन्तु तदतिरिक्तं एकस्यान्यस्य दिव्यविज्ञानस्य सत्यान्यपि तत्र विद्यन्ते, यानि आधुनिकविश्वस्य भाव्यपरिधौ नापतितानि।

(२) अथ द्वितीयं तत्त्वम्। वेदमन्त्रैर्ज्ञायते यत् अस्ति अत्र एकमिहलोकस्य सत्यं यत् निम्नकोटिकम् असत्यमिश्रितं च। तथा चोक्तं वेदे—'इमे चेतारो अनृतस्य भूरेः मित्रो अर्यमा वरुणो हि सन्ति' (ऋ० ७-६०-५) अत्र 'भूरेः अनृतस्य' इति शब्दाभ्यामसत्यबहुलम् ऐहलौकिक सत्यमेव निर्दिष्टम्। अथ च अस्ति तत्र ऊर्ध्वतमस्तरे सत्यस्य धाम भुवनं वा यद् वेदे 'ऋतचित्', 'ऋतस्य सदनम्' इत्यादिपदैः कीर्तितम्। तथा चामनन्ति मन्त्रवर्णाः—'त आववृत्रन् सदनाद् ऋतस्य आदिद् घृतेन पृथ्वी व्युद्यते' (१-१६४-४७) अनयोर्द्वयोः सत्ययोः द्वयोर्लोकयोः वा मध्ये अनेकानेकलोकाः सन्ति स्वस्वप्रकाशयुक्ताः। किन्तु तद् ऋतसदनमेव परमोच्चज्योतिषः सत्यसूर्यस्य वा लोकः, यो वेदे 'स्वः' 'बृहती द्यौः' 'सत्यं ऋतम् बृहत्' इत्यादिशब्दैः वर्णितस्तत्र तत्र। तस्य सत्यलोकस्य प्राप्तिपथः पुरुषेण अन्वेषणीयः।

(३) अधुना वैदिकरहस्यज्ञानस्य तृतीयं तत्त्वं विमृशामः। वेदानुसारं अस्माकमिदं जीवनं दैवासुरशक्तीनां संग्रामस्थलम्। तत्र एकतः सन्ति दिव्यज्योतिषः शक्तयः अर्थादग्नीन्द्रमित्रवरुणभगार्यमादयः देवाः अपरतश्च सन्ति अन्धकारस्य शक्तयः अर्थाद् वृत्र पणि-दस्यु-नमुचिप्रभृतयो दैत्याः। आसामन्धकारशक्तीनां विरोधमापाकर्तुं देवशक्तीनामावाहनं करणीयं भवति। आवाहितास्ता अस्मास्ववतीर्य अस्मान् मनसः मिथ्याप्रकाशाद् उद्धरन्ति। परमसत्यस्य मार्गेण च अस्मान् ज्योतिर्मयीं कल्याणमयीममृतावस्थां प्रापयन्ति। इयमवस्था एव दिव्या सिद्धिः। अस्याः साधनं च आभ्यन्तरो यज्ञः। 'वेदा हि यज्ञार्थमभिप्रवृत्ताः' इति नास्ति श्रीअरविन्दस्य विप्रतिपत्तिः। किन्तु स स्पष्टतया प्रबलतया च आचष्टे यद् वेदे वर्णितो यज्ञ आमूलचूलं साङ्गोपाङ्गं च प्रतीकात्मकः। स प्रधानतः आभ्यन्तरः न तु बाह्यः। वेदोक्तयज्ञस्य सर्वाण्यपि अङ्गानि अस्मदन्तरे एव सन्ति। मनुष्ये अन्तरेवास्ति अग्निः अन्तरेव वेदिः हविः होता च, अन्तरेव ऋषिः मन्त्रः देवता च। अभ्यन्तरे एव प्रधानपुरोहितस्य ब्रह्मणः वेदगानम्। अभ्यन्तरे एव देवद्वेषिणो दैत्याः अन्तरेव अन्धकाररूपो वृत्रः। अन्तरेव च वृत्रहन्ता प्रकाशाधिपति इन्द्रः। किम्बहुना, अस्य यज्ञस्य यजमानः पुरोहितः, हविः, समिधः, घृतं, सोमः, पुरोडाशः, फलं च सर्वमपि आन्तरिकमेव।

इत्थं चेत् अयं प्रश्नः उदेति यदस्य यज्ञस्य यजमानः कः, कः पुरोहितः, किं च समिधादिकम्। तदुच्यते। जीव एव, आत्मा एव अस्यान्तर्यज्ञस्य यजमानः, तस्य हृदयमेव वेदिः। कस्तर्हि पुरोहितः? हृदयस्थः दिव्यसंकल्पाग्निरेव पुरोहितः। अथ काः समिधः? जीवस्य देहप्राणमनांसि, तस्य सत्ताया अन्यानि च अङ्गोपाङ्गान्येव समिधः। किं तर्हि घृतम्? मनसो बुद्धेर्वा निर्मलता प्रकाशयुक्तावस्था च घृतम्। अथ किं हविः? देहप्राणमनसां नानाविधा अवस्था भावा वृत्तयश्च, सत्यस्यान्वेषणार्थमभिव्यञ्जनार्थञ्च क्रियमाणानि यानि कान्यपि कार्याणि च हविः। एवं चेत् ईदृशसूक्ष्मान्तर्हविष्प्रदानस्य फलम् किम्? द्युलोकात् ज्योतिश्शक्तिसत्यानन्दामृतत्त्वादीनां दिव्यैश्वर्याणां वृष्टिरेव अस्य फलम्।[1]

तदेवमस्माभिर्वेदोक्तयज्ञस्य प्रतीकात्मकं स्वरूपं दृष्टम्। अथ—मन्तर्यज्ञो हि वेदानुसारं एका यात्रा, ऊर्ध्वारोहणरूपिणी यात्रा, देवत्वप्राप्तये क्रियमाणा तीर्थयात्रा, सा यात्रा च पुनः युद्धरूपा, यतस्तस्याम् अन्धकारस्य शक्तिभिः सह प्रचण्डसंग्रामः कर्तव्यो भवति। इमां युद्धमयीं यज्ञयात्रां वयं अग्निदेवं पुरोहितं वृत्वा तत्साहाय्येन सम्पूरयामः।

वैदिकयज्ञस्येदं यात्रात्मकस्वरूपं च वेदस्य 'अध्वर' शब्देन सूच्यते। श्रीअरविन्दानुसारं यज्ञवाचकं 'अध्वर' पदं व्युत्पत्तिदृष्ट्या 'अध्वन्' पदेन सम्बद्धम्। 'अध्वा' इति शब्दः 'अध्' गतौ इत्यस्मात् वैदिकधातो व्युत्पन्नत्वात् मार्गवाचकः। ततश्च 'अध्वानं' मार्गं राति ददाति[2] इति

---

१. वेदे यजमानः गवाश्व-रयि-रत्न-वीर-प्रजा-तनयादीन् यानपि पदार्थान् प्रार्थयते, ते सर्वे अन्तर्यज्ञेन लभ्यानामन्तरैश्वर्याणामेव संकेतका इति सोपपत्ति प्रतिपादयितुं शक्यम्।

२. यद्वा, गम्लृ गमने इत्यस्माद् धातो र्निष्पन्नः 'गत्वरः' शब्द इव 'अध्' धातोर्व्युत्पन्नः 'अध्वर' शब्दः गत्वरः, गतिशील इत्यर्थं निरूपयति। ततश्च यज्ञः गतिशीलः ऊर्ध्वलोकान् प्रति देवान् प्रति वा सततं प्रगमनशीलः, आरोहणपरः इत्यर्थः सूचितो भवति। एवं च यज्ञस्य यात्रारूपत्वं स्पष्टं संजायते।

'अध्वरः यज्ञ' इति व्युत्पत्तेः अध्वर-शब्दः यज्ञस्य मार्गस्वरूपत्वं मार्ग-प्रदायकत्वं च द्योतयति ।

प्रसिद्धमेवेदं लोके यद् यज्ञः देवत्वप्राप्तेः, देवानां स्वर्गादिलोकानां वा प्राप्तेर्मार्ग इति । स देवत्वस्य मार्गो वा तत्प्राप्तये मार्गप्रदायको वा इत्ययं भावोऽनया उपर्युक्तव्युत्पत्त्या विशदीक्रियते । नास्ति ध्वरः हिंसा यस्मिन् सोऽध्वरः हिंसारहितोऽहिंसितो वा (यज्ञः) इति चार्थः क्रियते । परं श्रीअरविन्दमतेन 'अहिंसितः' इत्यर्थकशब्दस्य कालान्तरेण यज्ञ-पर्यायत्वेन प्रयोगो नैव सम्भाव्यते नोपपद्यते वा । शब्दानामीदृशमर्थ-परिवर्तनं भाषाविज्ञानेन अर्थविकासार्थं परिवर्तनसिद्धान्तैर्वा समर्थयितुं न शक्यम् ।

---

'अध्वर' शब्दस्य ईदृशीं युक्तियुक्तामद्भुतां च व्युत्पत्तिमुद्भावयन् श्रीअर-विन्द एवमाह—'ध्वृ' धातुर्हिंसार्थकः । अतः सायणः 'अध्वर'स्यार्थम् 'अहिंसितो यज्ञ' इति कृतवान् । किन्तु ( अहिंसितार्थकः ) 'अध्वर' शब्दः स्वतः ( यज्ञादि विशेष्यं विना पृथगेव ) यज्ञवाचकः संजातः । 'अहिंसितः' इत्यर्थकशब्दस्येदृशमर्थपरिवर्तनं न सम्भवम् ।

'अध्वन्' इति शब्दस्य 'मार्ग' इत्यर्थः, अतः 'अध्वर' पदस्यार्थः 'मार्ग-गामी' 'मार्गस्वरूपः' इत्येव वा स्यात् । यज्ञो देवधामगमनपथ आसीत्, सर्वत्र प्रथितश्च यज्ञो देवधामपथिकत्वेन । अयमेव च संगतार्थः । अध्वर' शब्दोऽपि 'अध्वन्' इति शब्द इव 'अध्' धातोर्निष्पन्नः । अत्र चैकं प्रमाणमपि प्राप्यते । तच्चेदम्—'अध्वा' 'अध्वरः' इत्युभावपि आकाशार्थे व्यवहृतावास्ताम् । श्रीअरविन्दस्य 'विविधरचना' इति वङ्गपुस्तकादनूद्य उद्धृतम् । 'On the Veda' नामकात् तस्य बृहद्ग्रन्थादपि एकः सन्दर्भोऽत्र समुद्ध्रियते—"अध्वरो नाम 'यात्रा' 'गमनं' वा । अयं शब्दः 'मार्ग' वाचकेन 'यात्रा' परकेण वा 'अध्वन्' पदेन सम्बद्धः । इदं पदं च विलुप्ताद् 'अध्' धातोर्निष्पन्नाम् 'अध्' धातुः गति-विस्तारायाम-संहत्यादिषु रूढ आसीत् । 'अध्वन्' 'अध्वर' इत्यनयोर्द्वयोः शब्दयोः सम्बन्धोऽर्थसाम्येन ज्ञायते । 'अध्वा' वायुवाचकः आकाशवाचको वा, 'अध्वर' शब्दश्चापि एतदर्थकः । सन्ति वेदेऽनेकानेक-सन्दर्भा यत्र 'अध्वर' स्य वा सम्बन्धो यात्रायाः, पर्यटनस्य मार्गेऽग्रतः प्रयाणस्य वा विचारेण सह वरीवर्ति ।" (On the Veda P. 214)

(४) सम्प्रति वैदिकतत्त्वज्ञानस्यान्तिमं चतुर्थं च तत्त्वमुपकर्ण्यते। निखिलेऽपि ब्रह्माण्डे एकैव वस्तुसत्ताऽस्ति, नान्या इतीदं वेदस्य चरमशिखरायमाणं रहस्यम्। एतच्च वेदस्य शतशः मन्त्रेषु विशदतया समुद्घोषितम्। तत्राहं कांश्चिन्मन्त्रान् श्रावयामि।

इदं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गुरुत्मान्।
एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः॥
( ऋ० १.१६४.४६ )

आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किन्चनास।
( ऋ० १०.१२९.२ )

अथ च सन्ति अथर्ववेदे केचित् प्रसिद्धमन्त्राः—

न द्वितीयो न तृतीयश्चतुर्थो नाप्युच्यते।
य एतं देवमेकवृतं वेद॥[1] ( १३.५.१६ )
न पंचमो न षष्ठः सप्तमो नाप्युच्यते।
य एतं देवमेकवृतं वेद॥ १७॥
नाष्टमो न नवमो दशमो नाप्युच्यते।
य एतं देवमेकवृतं वेद॥ १८॥
तमिदं निर्गतं सहः स एष एक एकवृदेक एव।
य एतं देवमेकवृतं वेद॥ २०॥

---

१—सर्वे अस्मिन् देवा एकवृतो भवन्ति। य एतं........( अथर्व० १३.५.२१ )

सोऽर्यमा स वरुणः स रुद्रः स महादेवः। रश्मिभिर्नभ आभृतं महेन्द्र एतत्यावृतः। ( अथर्व०......१३.४४ )

सो अग्निः स उ सूर्यः स उ एव महायमः। रश्मि.....( १३.४.५ )

एते अस्मिन् देवा एकवृतो भवन्ति॥ ( १३.४.१३ )

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः।
तदेव शुक्रं तद् ब्रह्म ताऽआपः स प्रजापतिः॥ ( यजुर्वेद, ३२.१ )

एक एवाग्नि र्बहुधा समिद्ध एकः सूर्यो विश्वमनु प्रभूतः।
एकैवोषाः सर्वमिदं विभात्येकं वा इदं विबभूव सर्वम्॥
( ऋ० ८.५८.२ )

इत्यादयो मन्त्रा अपि अत्र स्मर्तव्याः।

ईदृशाः शतशो मन्त्राः तस्य ब्रह्मणः एकत्वं घोषयन्ति च।

वस्तुतोऽसौ देव एक एव। स देवानामादिदेवो देवाधिदेवश्च। वेदेषु कीर्तिताः अग्नीन्द्रमित्रवरुणभगार्यमादयोऽन्ये सर्वेऽपि देवा एकस्यैव परस्य पुरुषस्य देवाधिदेवस्य नामानि। न च केवलं तस्य नामानि किन्तु तस्य शक्तयोऽपि तत्तद्व्यक्तित्वविशिष्टाः मूर्तिमत्यः शक्तयः। प्रत्येकं देवस्य पृष्ठतः सर्वा अपि अन्या देवतास्तिष्ठन्ति। स च मुखत एव तत्तद्देवो भवति। तस्य पृष्ठतः सर्वदेवमयः परः पुरुष एव विराजते। स एव सच्चिदानन्दस्वरूपः परमदेवोऽस्माभिरनुसन्धेय उपलब्धव्यश्चेति वेदस्य प्रधानं प्रतिपाद्यम्। एतच्च स्वयं भगवान् वेदः प्राह स्वमन्त्रवर्णैः—

ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासेत॥
(ऋ० १.१६४.३९)

अस्मिन् मन्त्रे 'यः तत् न वेद किम् ऋचा करिष्यति' इति चरणेन स्पष्टमेव निरूपितं यद् यो मनुष्यस्तत् अक्षरं परमं विश्वदेवाधिष्ठानं 'तद् ब्रह्म न वेद स ऋचा किं करिष्यति? न तेन विदितं ऋचां विवक्षितं चरमं परमं च तत्त्वम्। तथा सति किं तस्य ऋग्भिः प्रयोजनम्?

इदमेव तच्चतुर्धा विभक्तं वैदिकं रहस्यज्ञानं यत् श्रीअरविन्देन 'On the Veda' नामके स्वग्रन्थे सविस्तरं प्रस्थापितम्।

इत्थमस्याभि र्दृष्टं यत् श्रीअरविन्देन वेदस्य यो रहस्यार्थो निरूपितः स आन्तरिकः आध्यात्मिको मनोविज्ञानमूलको वा। जानन्त्येव भवन्तो यन्मनोविज्ञानं आधुनिकान्तर्विज्ञानेषु नव्यतमम्। वेदोपनिषद्गीतायोगदर्शनादीनामध्ययनेन ज्ञायते यत् प्राचीनकाले मनोविज्ञानं चरमविकासमारूढमासीत्।[१] तत्समक्षं आधुनिकं पाश्चात्यं मनोविज्ञानन्तु बालचेष्टा-

---

१—वेदे उपनिषत्सु च चितेर्व्यापाराणां सूक्ष्मभेदप्रभेदा नानापदैर्निरूपिता दृश्यन्ते। तद्यथा मनः, मतिः, धीः, मनीषा, इति मनसः शक्तेः क्रियायाश्च भेदाः, चेतनः, विचेताः, प्रचेताः, इति चेतनसत्तायाः स्तरभेदाः, मनीषी, मेधावी, धीर, इति स्थितप्रज्ञस्य भेदाः, विप्रः, विपश्चित्, विचर्षणिः, कविः, ऋषिः, इति प्रकाशयुक्तसत्ताया भेदाः, स्वस्ति, सुभम्, भद्रम्, शिवम्, कल्याणम् इति सुखमयास्तित्वस्य भेदाः, मुदः, प्रमुदः, शम, शर्म, वामम्, वनम्, मय इति आनन्दावस्थाया भेदाः, सत्, असत्यम, ऋतम्, चित्, बृहत्

मात्रम्। श्रीअरविन्दः प्राचीनभारतीयमनोविज्ञान—( योगविद्या ) सम्मतं वेदार्थं व्याख्यातवान्। अनया दृष्ट्या सोऽस्मिन् युगे नूतनाध्यात्मिक-वेदभाष्यस्य प्रेरणप्रणयनप्रवर्त्तनद्वारा संस्कृतसाहित्यक्षेत्रे आधुनिकतमां महतीं विक्रान्तिं सम्पादितवान्। ईदृशविक्रान्तिकरणेन वेदस्य वास्तविक-रहस्यगवेषकत्वेन च तस्य कीर्ति र्यावच्चन्द्रदिवाकरौ अजरामरा स्थास्यतीति नात्र मे संशीतिलेशोऽपि। आगामियुगमस्माकमिदं कथनं प्रमाणयिष्य-तीत्यलं विद्वद्वरेण्येषु।

---

इति परमसत्तायाः स्वरूपविवृतिरित्यादि। वेदोपनिषदामृषयः सत्तायाश्चेतनायाश्च गम्भीरतमविशालतमोच्चतमस्तरानवगाहित वन्त इति सम्यग् विज्ञायते वेदोपनि-षदां पदैर्मन्त्रैश्च।

# आधुनिकसंस्कृतसाहित्येऽद्वैतवेदान्तस्य विवेचनम्

राममूर्ति शर्मा

संस्कृतभाषायामद्वैतवेदान्तविषयमवलम्ब्य पञ्चाननतर्करत्न-शङ्कर-चैतन्यभारती-अनन्तकृष्णशास्त्रि-विनोबाभावेमहोदयानां कृतयः सन्ति। तत्र पूर्वं पञ्चाननतर्करत्नमहोदयानां विषये विवेचनीयम्। अत्रेदं वैशिष्ट्येनोल्लेखनीयं—यत् ब्रह्माद्वैतवाद-विशिष्टाद्वैतवादादिसिद्धान्ताननुसृत्य तु ब्रह्मसूत्रस्य बहूनि भाष्याणि प्राप्यन्ते। परं शक्त्यद्वैतवादमनुसृत्य ब्रह्मसूत्रभाष्यस्य या रचना तर्करत्नमहोदयैः विहिता, सा अद्वैतदर्शनशास्त्रस्य क्षेत्रे अभूतपूर्वा एवेति मन्यते सर्वैरपि समालोचकैः। ब्रह्मसूत्रस्य भाष्यं संपादयद्भिः तर्करत्नमहोदयैः "शक्तिरेव ब्रह्म" इति सिद्धान्तस्य स्थापनं कृतम्। अभेदत्वं हि शक्तिशक्तिमतोः तर्करत्नमहोदयस्य शक्त्यद्वैतवादस्य वैशिष्ट्यम्। एतेषां मते शक्तिरपि चित्स्वरूपिणी।[1] तथा च चिच्छक्त्यैव परमात्मा स्वकीयां सिसृक्षां पूरयति। अत्रास्ति अस्य लेखकस्य किंचिन्निवेद्यम्। तद्धि सच्चिदानन्दरूपिणः परमात्मनोऽभेदरूपिण्या चिच्छक्त्या जगतो या समुत्पत्तिः प्रदर्शिता सा अहैतुकी प्रतीयते। अत्रेदं कारणं यत् चित्-तत्त्वात् चित्स्वरूपिण एव जगतः समुत्पत्तिः सम्भाव्यते नाचितः। सम्भवेत् चेत्तदा अद्वैतवाद एवानिष्पन्नः। अत इदं प्रार्थये यद् ब्रह्मसूत्रस्य अद्वैतप्रतिपादकं भाष्यं शाङ्करमेवेति सत्यम्।

विंशशतीलेखकेषु काशीसेविनां विद्वद्वर्याणां शङ्करचैतन्यभारतीमहोदयानां कीर्तिः सर्वत्र व्याप्नोति इति नात्र सन्देहः। भारत्याः सुपुत्रेणानेन भारतीमहानुभावेन अद्वैतवेदान्तस्य प्रमुखसिद्धान्तस्य ख्यातिवादस्य साकल्येन वैशिष्ट्येन च समालोचनं सम्पादितम्। अनेन विदुषा सरस्वतीभवनपुस्तकालयाध्यक्षेण प्रकाशिते स्वकीये ख्यातिवादनामके ग्रन्थे न केवलमद्वैतवादसिद्धान्तप्रतिपादकस्य अनिर्वचनीयख्यातिवादस्यैव विवेचनं कृतमपि तु रामानुजाचार्यस्य सत्ख्यातिवादस्य, मीमांसकस्य

---

१—वेदान्तदर्शन-अद्वैतवाद-आशुतोषशास्त्री वंगसंस्करणम्।

अख्यातिवादस्य, नैयायिकस्य अन्यथाख्यातिवादस्य, विज्ञानवादसंवलितस्य आत्मख्यातिवादस्य, शून्यवादसंपृक्तस्य असत्-ख्यातिवादस्यापि च तुलनात्मकमालोचनं कृतम्। ख्यातिवादसंबद्धानां बहूनामपि सिद्धान्तानां विवेचनं कुर्वतानेन सिद्धान्तपक्षधिया अद्वैतवादसंपोषकस्यानिर्वचनीय-ख्यातिवादस्यैव प्रतिपादनं विहितम्।

अनन्तकृष्णशास्त्रिणां प्रधानग्रन्थाः—शतभूषणी, अद्वैततत्त्वशुद्धिः (भागद्वयेन पूर्णा) अद्वैततत्त्वसुधा च सन्ति। ग्रन्थत्रयेऽपि शतभूषण्या महत्त्वं सर्वाधिकम्। "शतभूषणी" ग्रन्थस्य निर्माणस्यापि सांप्रदायिकी कथा वर्तते। यथाहि—पूर्वं वेदान्तदेशिकनामकैर्विद्वद्भिरद्वैतवेदान्तस्य खण्डनं कुर्वद्भिः "शतदूषणी" नामकस्य ग्रन्थस्य रचना कृता। नामानुकूलमेव च शतदूषणीकारेण अद्वैतवेदान्तस्य शतं दोषाः प्रदर्शिताः। अद्वैतसिद्धान्तसमालोचकः श्रीअनन्तकृष्णशास्त्रिमहोदयः शतदूषणीकारस्य दरिद्रदम्पतीन्यायपुष्टस्य अद्वैतवेदान्तस्य खण्डनस्य अनौचित्येनातीवासंतुष्टोऽभवत्। एतस्मादेव हेतोरनेन विपश्चिता शतदूषण्यां प्रदर्शितानां शतानामपि दोषाणां स्वकीयायां शतभूषण्यां पूर्वं खण्डनं कृतम्। ततश्च अद्वैतवेदान्तस्य शतं भूषणानि प्रतिपादितानि। अत एव आचार्यस्य शतभूषणी दर्शनसाहित्ये अभिनव-सम्पत्तिं योजयति।

श्रीअनन्तकृष्णशास्त्रिणां द्वितीयो ग्रन्थः—अद्वैततत्त्वशुद्धिः। ग्रन्थेऽस्मिन् अद्वैतवेदान्तस्य मौलिकेक्षिकया प्रतिपादकेन विदुषा अद्वैत-सिद्धान्तस्यान्तर्वर्तिनामनेकानामपि सिद्धान्तोपसिद्धान्तानां साकल्येन समालोच सूत्रशैल्या कृतम्। अनन्तकृष्णशास्त्रिमहोदयानां च तृतीयो ग्रन्थः "अद्वैततत्त्वसुधा" इति। अस्मिन् ग्रन्थे समग्राणामपि अद्वैत-सिद्धान्तानामतीव समुचितं समालोचनं संपादितं विद्यते।

भूदानसिद्धान्तस्य प्रचारका विनोवाचार्यवर्याऽपि सिद्धान्तेनाद्वैत-वादिन एव। संस्कृतभाषायामनेन "साम्यसूत्रम्" नामके ग्रन्थे सिद्धान्त-सूत्राणां रचना कृता। आचार्यवर्यस्य सूत्रेष्वेतेषु समत्वमनुसृत्य अद्वैत-वेदान्तसिद्धान्तस्यैवाभिनवशैल्या कृतं प्रतिपादनं समुपलभ्यते।

# ऊनविंशशतकस्य नाटकद्वयम्

शिवदर्शन तिवारी

संस्कृतनाट्यसाहित्ये भारतवर्षस्य महद्योगदानमस्ति। प्राचीनकालादेव प्रदेशोऽयं संस्कृतस्य संवर्धनाय प्रयत्नशीलः परिलक्ष्यते। प्रदेशेऽस्मिन् बहवः कवयः नाटककाराश्च प्रादुरभूवन्, येषां कृतयोऽद्यापि श्रेष्ठपदमधिरोहति। एतेषु नाटककारेषूनविंशशतकस्य नाटककारद्वयस्य संक्षिप्तपरिचयं ददता मया तस्य नाकटद्वयस्य किञ्चिद् विवरणं प्रस्तूयते।

## रससदनभाणः

कविपरिचयः—केरलप्रदेशान्तर्गतकोटिलिङ्गपुराधिवासिना प्रसिद्धेन संस्कृतसाहित्यविमर्शविदुषा गोदावर्म्मयुवराजेन रचितोऽयं नाट्यग्रन्थः मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसादतनयपण्डितकेदारनाथ शर्मणः सम्पादनसाहाय्येन, मुम्बापुरवासिपणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजवासुदेव शर्मणः संशोधनसाहाय्येन च १९२२ तमे वर्षे प्राकाश्यं नीतः[१]। कोलम्बियाविश्वविद्यालयस्य संस्कृतनाट्यसाहित्यसूच्यनुसारमस्य नाटकस्य प्रकाशनं बम्बईतः १८९३ तमे वर्षेऽभवत्[२]। युवराजस्य द्वितीयं नाम 'इल्यातम्पूर' इति आसीत्। अस्य महाभागस्य जन्म केरलप्रदेशान्तर्गतकोटिलिङ्गपुरे (Cranganore) १८०० तमे ई० वर्षेऽभवत्[३]। अस्य पितरौ मातृदत्ता-कुञ्ची- कुट्टीतम्पूरत्ती चास्ताम्।

---

१—रससदनभाणः; काव्यमाला सीरिज, नं० ३७, बम्बई, १९२२ ई०

2—Bibliography of Sanskrit Drama, Columbia University, Indo-Iranian series. Vol. III, P 97.

3—(A) Kerala Contribution to Sanskrit Literature—K. Kunjunn Raja, Pages. 247-49.

कुन्नीकुट्टीतम्पूरत्ती वेलङ्गनूरस्य इलक्कूत्रृषिकुलस्य नम्बूदीरी-ब्राह्मणो आसीत् । युवराजस्य प्रारम्भिकाध्ययनं श्रीवलप्पील ( Valappil ) असनमहोदयादभवत् । तदनन्तरं युवराजेन श्री अरूरमाधवन अत्तिरी श्री पन्तूलम् सुब्रह्मण्यशास्त्रिमहोदयाभ्यां व्याकरणज्योतिषशास्त्रहस्ति-विधि-विद्यादीनां सम्यगध्ययनं कृतम् । शास्त्राण्यधीत्य युवराजेन बहवः ग्रन्थाः संरचिताः, येषां नामसंसूचनं मद्रासविश्वविद्यालये रीडरपदेऽधिष्ठितेन डा० के० के० राजेनप्रणीते 'केरलाज कन्ट्रीब्यूशन टू संस्कृत-लिटरेचर' इति नामग्रन्थे रससदनभाणस्य टीकायामपीत्थमुपलभ्यते :—

(१) बालोद्भवम् वा महेन्द्रविजयं महाकाव्यम् ।
(२) त्रिपुरदहनचरितं संक्षिप्तपद्यम् ।
(३) श्रीपादसप्तकं स्तोत्रम् ।
(४) मुररिपुस्तोत्रम ।
(५) सुधानन्दलहरी स्तोत्रम् ।
(६) रामचरितं महाकाव्यम् ।
(७) रससदनभाणः ।
(८) देवदेवेश्वराष्टकम् ।
(९) सदाशिवी अथवा स्फुटश्लोकप्रकरणम् ।
(१०) हेत्वाभासोदाहरण-श्लोकाः ।
(११) अशौचदर्शकम् ।
(१२) भास्करीयः, गोलाध्यायः, गरुडच्छायाप्रमाणादयः व्याख्या-परकग्रन्थाः ।

उपर्युक्तेषु ग्रन्थेषु 'महेन्द्रविजयाख्यमहाकाव्यम्' कवेर्युवराजस्य प्रथमा कृतिः । 'रामचरितं' कवेः प्रधानतमा (Masterpiece) रचना । रससदनभाणः केरलप्रदेशस्य प्रमुखतमो भाणः[1] । शेलरमहोदयः

(B) Vidvan Ilya Tampuran; Rasikarañjini, IV, K. Narayana Pisharoti, Mangalodayam, XVIII-12.

(C) Vidvad Yuvaraj Caritam-Kotunnullur Koccunni Tampuran Sahitya Parishad Traimasikam, XI-12.

(D) Kerala sahitya Caritam-Ullur S. Parmeshvar Iyer, IV, 31FF.

1—(A) Sanskrit Dharma—A.B. Kaith, P. 264.

( Schuyler ) रससदनभाणं 'पार्थपराक्रम' रचयित्रा युवराजप्रह्लादनेन विनिर्मितं भणति[1]। एल० डी० बार्नेट महोदयः 'रससदनभाणस्य' रचयितारं 'युवराज' इति नाम्ना प्रख्यातं सदाशिवं वर्णयति[2]। किन्तु स्वमतस्य स्पष्टीकरणार्थं महानुभावोऽयं पूर्णतया असमर्थो दृश्यते। वयं न जानीमहे यत् महोदयेनानेन 'सदाशिवस्य' इत्यपरं नाम कुतो गृहीतम्। कोच्चुणितम्पूरन महोदयेन, यो खलु युवराजस्य 'रामचरितं' पूर्णतां नीतं, स्वकीये 'विद्वद्वरचरिते' ग्रन्थे स्पष्टरूपेण युवराजसम्बन्धिनी चर्चा कृता। अतः सुस्पष्टमेतत् यत् 'रससदनभाणस्य' रचना कोटिलिङ्गपुरराजसभा-निवासिना गोदावर्म्म युवराजेनैव कृता। भाणस्यास्यावसाने सुधानन्द-लहर्यावसाने च कविविषयकः इत्थं प्रसङ्गः उपलभ्यते :—

> यस्यास्य तामरसलास्यरसा च वाणी।
> हर्षं न कस्य कुरुते युवराज एषः॥
> व्याकृत्यादि समस्तशास्त्रसमुदायाम्भोधिकुम्भीसुतः,
> काव्यालङ्कृति-नाटकाध्वसुकृती काव्यस्य सत्यं समः।
> पुण्यः पण्डितराजिराजिगजता कुम्भाद्रि-संभेदने,
> दम्भोलिर्युवराज कोविदमणिर्वर्वर्ति सर्वोपरि॥

श्लोकेनानेन स्फुट्यते यदयं नाटककारः स्वकालस्यसाहित्यनिर्मातॄणामुत्तम आसीत्।

## भाणस्वरूपम्

सामाजिककुरीतीनामुद्घाटनार्थं प्राचीनकालादेव भाणप्रहसने द्वेऽस्त्रे कवीनां स्तः। कवय एतेन कस्यचिदपि समाजस्य राष्ट्रस्य प्रदेशस्य वा कुत्सितपरम्पराया उद्घाटनं कृत्वा तन्निराकर्तुं मार्गं प्रदर्शयन्ति स्म। युवराजोऽप्यनेनैवोद्देश्येन भाणमिमं प्रणीतवान्। भाणेऽस्मिन् प्रवेश-

---

(B) Das Indische Drama—S. Konow, P, 121.

(C) Geschichte-Winternitz, III, P. 263n.

(D) Sahitya Parishad Traimasikam, Ernakulam, VII-2, P. 191F.

1—Bibliography of Sanskrit Drama-Schuyler, P 97.

2—(A) Review of the 'रससदनभाण' Journal of Research Asiatic Society, 1907, P. 722.

(B) British Museum Catalogue, 1892-1906.

कानन्तर एको विटः रङ्गपीठोपरि समायाति। असौ स्वानुभूतानि परानुभूतानि वा धूर्तचरितानि वर्णयति।

## कथावस्तु

भाणस्यास्य नायकः विटः स्वमित्रस्य मन्दारकस्य भार्यायाः चन्दनमालायाः रक्षार्थं प्रतिज्ञां कृत्वा तया सह यात्रोत्सवावसरे कालिकायाः मन्दिरं प्रति गच्छति प्रातःकाले तस्याः गृहं गत्वा तां मन्दिरं नयति। कालिकायाः दर्शनान्तरं तया सह निशायां गृहं प्रत्यागच्छति किञ्चित्कालानन्तरं पुनः सः वीथ्यां परिभ्रमति। अप्रिलमासे आयोज्यमाने पुरमुत्सवावसरे त्रिचूरप्रदेशस्य कासाञ्चिदबलानां तत्रागमनाय निमन्त्रणं स्वीकृत्य, स पूर्वं चन्दनमालाया गृहे गच्छति। तां स्वमित्रमन्दारकेण सह दृष्ट्वा परमामोदमनुभवति। एष एव कथानकस्य सारांशः यो नाटककारस्य स्वबुद्धिवैशद्येनाभिनवकल्पनया च वृद्धिं प्रापितः।

अत्र कथावस्तूत्पाद्यमस्ति। भाणस्य प्रारम्भे मुखसन्धेः अवसाने च निर्वहण-सन्धेः निर्वाहो परिलक्ष्यते। स्थितपाठ्यासीनादीनां लास्याङ्गानां यथास्थानं प्रयोगोऽपि दृश्यते।

## रसच्छन्दोऽलङ्कारविवेचनम्

रसः—यद्यपि भाणे न कस्यचिदपि रसस्य प्राधान्यं भवति तथापि रसाभासस्तु भवत्येव। भाणेऽस्मिन्नपि शृङ्गाररसस्याभासः प्राबल्येन पदे पदेऽनुभूयते। शृङ्गाररसस्य वर्णने कवेर्धिषणा प्रशंसार्हा। यथैकेनैव शृङ्गाररसस्योदाहरणेन स्फुट्यतेः—

राकामुखेन दशमी च कपोलकान्त्या,
फालेन पंचमतिथिः प्रतिपन्नखाङ्कैः।
एषा कुहूरपि कचप्रकरेण धत्ते,
प्रायः समस्ततिथि-संग्रहभाजनत्वम्॥

यद्यपि भाणेऽस्मिन् शृङ्गाररसस्यैवाभासो प्राबल्येनानुभूयते किन्त्वन्येषामपि वीरभयानकादिरसानामाभासः भवति। इमे गौणरूपेणात्र प्रतिपादितास्सन्ति। एकस्मिन् स्थले मत्तमतङ्गजस्य पलायने भयानकरसस्याभासो भवति। तद्यथा—

मत्तः कोऽपि मतङ्गजः प्रचलितश्छित्त्वा बलाच्छृङ्खलाम्,
चित्तं व्याकुलयन्समस्तजगतामुत्तुङ्गशैलाकृतिः।

स्रस्तो हस्तिपकस्य हस्ततलतः क्रुन्द्रवल्लीकुलः,
प्रत्यग्रस्तनितोग्रकण्ठनिनदः प्रत्यध्वमुद्भ्राम्यति ॥

## छन्दः

प्रायः शार्दूलविक्रीडितस्रग्धराशिखरिण्यादीनि छन्दांसि प्राधान्येन प्रयुक्तानि वर्तन्ते तथाप्यन्येषां छन्दसामभावो न वर्तते । वसन्ततिलकानुष्टुबादीनि छन्दांसि यथास्थानं प्रयुक्तानि सन्ति ।

## अलङ्कारः

यमकोपमानुप्रासादीनामलङ्काराणां प्रयोगे पटुरयं कविः । एकेनैवोदाहरणेन सुधियः कवेरस्यालङ्कारप्रयोगपाटवं विभावयन्तु—

नित्यं नश्चित्तपद्मे परिलसतु कपाली कपाली कपाली-
मालाधारी समस्तप्रमदजन-कलापः कलापः कलापः ।
भूत्वा निर्भाति यस्याधिकमसुसमरीणामरीणामरीणा-
मुत्पेष्टा यश्च दूरीकृतकमलमहस्तो महस्तो महस्तः ॥

## भाषाशैली

एकोनचत्वारिंशदधिकद्विशतश्लोकैरसंघटितोऽयं लघीयान् भाणः प्रणेतुरलघीयसीं वैदुषीमाचष्टे । भाणेऽस्मिन् दीर्घसमस्तपदानां प्राबल्यं श्लेषानुप्रासयमकाद्यलङ्काराणां बाहुल्यमप्रथितपदानां वैपुल्यं चार्थबोधे महत्कष्टं जनयन्ति तथापि न जानीमः कथमस्य सरसतया सहृदयचेतांसि पौनःपुन्येन समाकृष्यन्ते । अतोऽभिनन्दनीयः पठनीयश्चायं भाणो विद्वद्भिः । नाटककर्तुः भाषाशैल्या वैशिष्ट्यं ज्ञातुमधोलिखितासु पंक्तिषु दृष्टिनिक्षेपो विधेयः :—

"अहो रमणीयमेतत् । यदेताः सरसनर्तनकलाविलासप्रचलितपादपङ्कजसंघटितकिङ्किणीकुलकिलिकिलितकोलाहलतिलतण्डुलितसघनमर्दलमृदुलनिःस्वनलहरीप्रवाहमन्तरान्तराजायमानैर्मधुरमधुरजनीरजनिकरभ्रमसमापतितनिरतिशयप्रेमभरविरचितदृढालिङ्गनतारकापटलसंभावनाविषयरदनावलीविलसितवदनान्तरालविगलितै.........................इति । इमाः पंक्तयः नाटककारं महाकविबाणभट्टकोटिं प्रापयन्ति ।

## चरित्रचित्रणम्

पात्राणां चरित्रचित्रणे सिद्धहस्तोऽयं युवराजः। विविधानां धूर्त-पात्राणां चित्रणे कवेर्नैपुण्यं श्लाघनीयम्। तेषां चरित्रचित्रणमनेन समुचितरूपेणैव कृतम्। एषां नामाङ्कनमप्यत्र शोभनं वरीवर्ति। नायक-नामानुसारेणैव नायिकायाः नामोल्लेखो कवेर्वैदग्ध्यं द्योतयति। तद्यथा—मन्दारक-मदनमंजरी, महाकेत-महापताका, बालचकोर-बाल-चन्द्रिकेति'। वेशवनितायाः चरित्रचित्रणे नाटककर्तुश्श्लक्ष्णेक्षिकायाः परिचय इत्थमुपलभ्यते :—

> इष्टार्थसिद्धये पूर्वं कुर्वन्ति शपथान्बहून्।
> सिद्धे पुनर्विचेष्टन्ते विपरीतं हि योषितः॥

नाटककारः वेश्यावृत्तेर्मूलोच्छेदं कांक्षति। इदमेव कारणं यदनेन सर्वत्रैवास्मिन्भाणे तासां निन्दा कृता। वेशवनिताभिस्सज्जनाः कया रीत्या प्रवञ्च्यन्ते, परिणामतः तेषां समाजे कीदृशी गतिर्जायते इति प्रमाणपुरस्सरं प्रदर्श्य वेश्यावृत्तौ जानानां वैरस्यमुत्पादयितुं कविना चेष्टितम्। भ्रष्टाचार-दूरीकरणाय श्लाघनीयोऽयं कवेः प्रयासः।

## प्रकृतिचित्रणम्

प्रकृतिचित्रणे कवेरस्यानुरागातिशयः परिलक्ष्यते। यद्यप्याभ्यन्तर बाह्यतश्च प्रकृतिनिरीक्षणेऽस्य दृष्टिः तीक्ष्णतमा विद्यते तथाप्यनेन प्रकृतेस्सौम्यमेव रूपमभिवर्णितम्। प्रकृतावनेन नायिकाधर्ममुत्प्रेक्ष्य सर्वथा भाणस्यास्य चारुत्वं विवर्धितम्। प्रकृत्या विविधेषु रूपेषु नायिका-नायकयोः व्यापारसमारोपेण प्रकृतिः प्राणितेवास्मिन् भाणे कविनोप-वर्णितम्। प्रकृतेः माधुर्यमधस्तनश्लोकाद् ज्ञातुं शक्यतेः—

> नग्नां वीक्ष्य नभस्थलीं विगलितप्रत्यग्रधाराधर-
> श्रेणीश्यामलवाससं पतिरसौ रक्तः स्वयं मुञ्चति।
> इत्यन्तश्चिरमाकलय्य नलिनी शोकातिरेकादिव,
> व्यादायाम्बुजमाननं विलपति व्यालोलभृङ्गारवैः॥

अनया रीत्या बहुषु स्थलेषु भाणेऽस्मिन् प्रकृतेः बहून्यङ्गानि कविनोप-वर्णितानि। कनकगिरिमधिरोहतः दिनकरस्य, कूजतः पक्षिणः, वहतः पवनस्य, पुष्पितस्य कुन्दपादपस्य, प्रातर्मध्याह्नसन्ध्यायाश्च मनो-

हरवर्णनेनास्य भाणस्य चारुत्वं कविना सर्वथा विवर्धितम्। एकस्मिन् स्थले दीर्घिकायाः वर्णनमित्थमुपलभ्यते—

चञ्चद्भृङ्गकनीनिकास्फुटतरश्रीपर्णपर्णेक्षणा,
कश्मीरप्रभवाङ्गरागरुचिरा बालारुणीयैः करैः।
प्रच्छन्ना नवपुण्डरीकरजसा चेलेन चिल्लीनती,
बालोर्मिप्रकरैः करोति न मुदं बालेव किं दीर्घिका॥

## सामाजिकस्थितिः

गोदावर्म्मयुवराजेन भाणेऽस्मिन् यत्किमपि लिखितं वर्णितं चित्रितं वा तत्सर्वमूनविंशशतकीयस्य केरलप्रदेशस्य सर्वथाऽनुकूलमेव विद्यते। अद्याप्यस्मिन्प्रदेशे पुरुषाः युवतयश्च कालिकायाः यात्रोत्सवावसरे तादृशमेव वस्त्राणि धारयन्ति, राजदर्शनं कुर्वन्ति, मन्दिरं गत्वा देवीपूजनं कुर्वन्ति च। पाश्चात्यसभ्यतया प्रभाविता आधुनिकाः युवकाः युवतयश्चावश्यमेव देवानन्दाशोककुमारसाधनावैजयन्तीमालाप्रभृतयः युवकयुवतयोरिव वस्त्रधारणं कुर्वन्तः वैभिन्यं समुत्पादयन्ति, किन्तु ये सन्ति वृद्धाः, स्वसंस्कृत्यनुरागिणः ते त्वद्यापि तादृशेनैव वेषेण स्वात्मानं परिभूषयन्तः दरीदृश्यन्ते। केषुचिद् स्थलेष्वस्मिन् भाणे यद्यपि युवराजेनावश्यमेवातिशयोक्तिपूर्णं वर्णनं कृतं, किन्तु तदपि सर्वथा भाणस्यानुकूल्यायैव। एकस्मिन् स्थले युवराजः पुरुषैः स्त्रीभिश्च क्रियमाणं देव्याः कालिकायाः पूजनमित्थं वर्णयति :—

तद्यथा—

केचिद्देवीपदाब्जं स्वयमपर इह स्वात्मजैर्वर्धजातै-
रन्ये तत्स्तोत्रगानं निजशिरसि परे तत्पदाम्भोजपुष्पम्।
प्रादक्षिण्यं च तस्याः कतिचन कुसुमैरर्चनं केऽपि विप्रा-
न्वन्दन्ते वन्दयन्ते विदधति दधते कुर्वते कारयन्ते॥

सम्यगवलोकनेन भाणस्यास्य चारुत्वविषये न कोऽपि विमतिः। एवमादिभिः विषयैरुपगूढो भाणः संस्कृतज्ञैः श्लाघनीयः।

## धीरनैषधम्

**नाटककर्तुः परिचयः**—नाटकमिदं महामहोपाध्याय श्रीरामावतारशर्ममहोदयेन साहित्यरसज्ञेन विरचितं, यः खल्वेकोनविंशशताब्द्याः

महापण्डितः। महानुभावस्यास्य जन्म प्रोफेसर-हरिमोहनझा-डाक्टर के० पी० जायसवाल-वसुमाली-उपाध्यायादीनां मतेन गंगायमुनयोः संगमेऽवस्थितां 'छपरे'ति नामधेयां पुर्यां ६ मार्च १८७७ तमे वर्षेऽभवत्। केचिद् शर्ममहोदयस्य जन्मकालः फेब्रुअरी मासे १८७४ तमे वर्षे मन्यन्ते।[१] अस्य पिता 'श्रीदेवनारायणशर्मा' माता च श्रीमती गोविन्द देवी आसीत्। पं० देवनारायणशर्ममहोदयोऽपि विविधविद्यासु पारङ्गत आसीत्। शर्म्ममहोदयेन प्रणीते 'धीरनैषधे' तस्य परिचयः प्राप्यते।

शर्ममहोदयः स्वपितुः व्याकरणस्य प्रारम्भिकज्ञानं लब्ध्वा महामहोपाध्याय-श्रीगङ्गाधरशास्त्रि-महोदयस्य शिष्यो भूत्वा काशीस्थसंस्कृतराजकीयमहाविद्यालयात् साहित्याचार्यपरीक्षायां प्रथमं स्थानं प्राप्तवान्। गृहे पठतैवानेन एम० ए० पर्यन्तासु सर्वासु परीक्षासु प्रथमं स्थानं गृहीतम्। तदनन्तरं पटनाकलिकातादिषु विश्वविद्यालये व्याख्यातृपदमलङ्कुर्वताऽनेन काशीहिन्दूविश्वविद्यालयस्य संस्कृतविभागाध्यक्षपदं च समलङ्कृतम्। महाभागेनानेन नाट्यनिबन्धगीतादयो बहवो ग्रन्थाः संरचिताः। किन्त्वस्य धीषणायाः सम्यक् परिचयः दर्शनग्रन्थेष्वेवोपलभ्यते। संस्कृतविश्वकोषोऽप्यनेन विरचितः। महदाश्चर्यकरमिदं यदनेन पञ्चदशवयस्केनैव 'धीरनैषधनाटकं' प्राणायि। "इदं खलु 'धीरनैषधं' काश्यां महाकवेर्महामहोपाध्यायस्य श्रीगङ्गाधरशास्त्रिणोन्तेवसता प्रचुरकौतूहलेन बालप्रतिभेनरामावतारशर्मणा श्रीहर्षकवेर्नैषधीयचरितमधीयानैः सहाध्यायिभिस्तदीयं कवित्वशक्ति जिज्ञासुभिः सानुरागं सानुबन्धं सकौतुकं चाभ्यर्थितेन पञ्चदशवयस्केनैव प्रणीतमासीदि"ति नाटकस्य भूमिकायामेव लिखितम्। एतादृशि स्वल्पीयसि वयसि वर्तमानस्यैतस्य ईदृग्विधं नाटकप्रणयनमपूर्वप्रतिभायाः निःसंशयं निदर्शनम्। धन्योऽयं नाटककारः धन्याऽस्य मनीषा। किं बहुना! इयं खलु तस्य धिषणा यत्प्रणोदितेन गुरुवरेण रामावतार! त्वं महाकविर्भूयाः इत्याशीः प्रदत्ता। अविकत्थनोऽयं विद्वान्, यतो ह्यस्य नाटकस्य प्रस्तावनायामेव प्राक्तनकविसूर्यसमक्षमात्मानं खद्योतमिव मन्यमान, इत्थं वक्ति—

---

१. सागरिका—पत्रिका, द्वितीयवर्षस्य द्वितीयाङ्के—अच्युतानन्दझा, पृ० १५३।

"भारतीविलासनिवासे कालिदासे, दुर्मदविबुधकुलदुर्धर्षे श्रीहर्षे हृतसूरिसमज्ञानिर्झरिणीनिदाघे माघे, कविशेमुषीशाणे बाणे, महार्हकविता प्रसूतौ भवभूतौ, कोविदमदखण्डिनि दण्डिनि, दुर्दान्तलब्धवर्णवारणारौ मुरारौ च दिवंगते केनेदं पश्चिमशिखरिशिखरमारूढे दिनमणौ खद्योतेनेव विस्फुरितमि"ति ।

## कथानकम्

सुकवेः महीपतिश्रीप्रभुनारायणसिंहस्य शौर्यस्य वैदग्ध्यपाण्डित्ययोश्च मनोहरवर्णनान्तरं नटी-सूत्रधारयोः पारस्परिकवार्तालापेनैव वसन्तागमनं संसूच्य, महाराजनलस्य श्रुतशीलनामकं कञ्चुकिनं प्रवेश्य कविना मुख्यकथारम्भः कृतः। नलद्वारा हंसग्रहणेन तस्य मुक्त्या च प्रथमाङ्कस्यावसानं भवति । द्वितीयाङ्के राज्ञा भीमेन दमयन्त्यै वीरमदान्तकरं वरं पतित्वे वरणायानुमतिप्रदानं, तस्याः सख्या कमलया सह दृष्टः नलविषयकः स्वप्नसंलापश्चाभिवर्णितः। तृतीयाङ्के भैम्याः कृते इन्द्रस्याभिलाषः, चतुर्थाङ्के मदनातुरस्य राज्ञो नलस्य वियोगवैक्लव्यं, पञ्चमाङ्के गृहीतदौत्येन नलेन वियोगव्याकुलायाः भैम्याः दर्शनं, तस्यास्सखिभिस्सह मृडानीपूजनं मूर्च्छनं नलकरस्पर्शादुज्जीवनं चाभिवर्णितं कस्य सहृदस्य चेतसि विषादं नोत्पादयेत्। षष्ठाङ्के चिराद्दृष्टनलं प्रति दमयन्त्याः रोषो नलप्रार्थनया तस्या हर्षो महोत्पातानां बाधाच्च तयोः प्रासादाभ्यन्तरे प्रवेशोभिवर्णितः। नाटकस्यास्य सप्तमाङ्के समाप्तिः। करुणरसप्रधानोऽयमङ्कः। राज्ञो नलस्यास्य वैवर्ण्येन राजा भीमो महिषी च रोरुद्येते। किन्तु चेट्या नारायणस्य 'मास्म विक्लवतां प्रायः सत्वरं क्रियते मया, कोप्युपायो नलो येन प्राप्यते धीरतां व्रजेत्यनुग्रहवचनं श्रुत्वा तावुभावपि येन केन प्रकारेणोच्छ्वसितौ तस्य दर्शनार्थं प्रासादाभ्यन्तरे दमयन्त्याः प्रवेशो जायते। तदनन्तरमेव विष्कम्भकस्य परिसमाप्तिर्जायते। तदनन्तरं भैम्याः दयनीयदशायाः वर्णनं प्राप्यते यस्य स्मरणमात्रेणैव वज्रहृदयस्यापि द्विधाभेदनं सुनिश्चितं, कोमलहृदयानां तु का कथा। अस्मिन्नेवाङ्के यत्र-तत्र कथाया व्यवच्छेदः संभाव्यते, किन्तु सरस्वती स्वनर्मवचनैः भीमं मुहुर्मुहुराश्वासयन्ती कथामग्रे सारयति। यदा भीमः सारथिभ्यां वीज्यमानं मूर्च्छितं विरूपं नलं पश्यति, तदा संमोहं गच्छति। सरस्वती पुनः तमाश्वासयति। सरस्वत्या आश्वा-

सनकाल एवाकाशात् नारदस्यागमनं भवति, यः खल्वन्तःपुरपरिचारकान् संबोधयन्नित्थं वक्ति —

आदेशादित एव दानवरिपोर्भैमी समानीयताम् ।
(उच्चैः) आतोद्यादि च मंगलं पुरजनैः वैरं समारभ्यताम् ॥
( सहर्षातिरेकं ) उत्तीर्णो निषधाधिपोऽयमधुना दीर्घामिमामापदम् ।
( सोत्कण्ठं ) जातं सम्प्रति भूतलं किमथवा त्रैलोक्यमेवोज्वलम् ॥

तदनन्तरं नलः नारदाज्ञया नागराजकर्कोटकेन वितीर्णं वस्त्रं धारयित्वा वैरूप्यं विहाय पूर्ववत् जायते । सर्वे सविस्मयं तस्य रूपपरिवर्तनं पश्यन्ति । कृशाङ्गी करुणरसाधिदेवता दमयन्त्यपि सखीभ्यां धार्यमाणा दारकाभ्यामनुगता रङ्गमञ्चोपर्युपयाति । ते सर्वे राजानं भीमं भगवतीं भारतीं नारदं च प्रणमन्ति । तेऽपि सर्वे दयितेन चिरसंयुक्ता दमयन्ती वसुधाराज्यसुखमनुभूयादिति साशीर्वादं मङ्गलमुद्घोषयन्ति । इत्थं भरत-वाक्येन सह नाटकस्यास्य परिसमाप्तिर्जायते ।

## कथानकस्याधारः

महाकविश्रीहर्षविरचितं 'नैषधमहाकाव्यमे'व नाटकस्यास्य कथावस्तुन आधारः । किन्त्वत्रैवोपजीव्यस्यास्य च महदन्तरं विद्यते । एतस्मिन् महाराजनलस्य दमयन्त्याश्चाद्भुतं चरितं रूपकशैल्या निदर्शितं कविना । कविशेमुषी कथाकलेवरस्य संक्षेपीकरणे प्रवृत्ता दृश्यते । इदमेव कारणं यत् कविना कथामत्यन्तं संक्षिप्य त्रिचत्वारिंशत्पृष्ठात्मकमेव नाटकं प्रणीतम् ।

## नाटकसमीक्षा

**नेतृविमर्शः**—सप्तमाङ्कसमन्वितमिदं 'धीरनैषधं'नाम नाटकम् । नाटकस्यास्य नायको नलो धीरललितकोटिकः, नायिका दमयन्ती स्वकीया उत्तमाङ्गना च । नल आचारेण सुकुमारः स्वभावेन च मृदुलः । चरित्र-दृष्ट्या तावुदात्तगुणोपेतौ ।

**रसविमर्शः**—नाटकस्यास्य रसः शृङ्गारः । शृङ्गारव्यतिरिक्ताः करुणहास्यादयोऽन्येऽपि रसाः प्रयुक्ताः वर्तन्ते । शृङ्गाररसप्रयोगे वर्णने च नाटककर्तुः काव्यप्रतिभा विशेषेण स्फुरिता परिलक्ष्यते । विप्रलम्भ-शृङ्गारस्य वर्णनं त्वत्यधिकं मार्मिकं वर्तते । द्वितीयाङ्कस्य प्रियाविरहिणो

नलस्येदं वर्णनं कवि-कुल-चूडामणेः कालिदासस्य 'शाकुन्तलनाटकस्य' 'तव कुसुमशरत्वं शीतरश्मित्वमिन्दो' रिति श्लोकं स्मारयति। तद्यथा—

शीतांशुं निशितांशुकण्टकजुषं चक्रं वियोगिच्छिदं,
शुभ्रं बालमृणालमुल्वणवि ं ठ्यालं स्मरप्रेषितम्।
कश्मीरं स्मरवह्निमुर्मुरमसौ पाटीरमैरम्मदं,
पाण्डुज्योतिरशर्मदं कलयते भीमात्मजे त्वामृते॥

षष्ठाङ्के विदूषकवामनकयोर्वार्तासु हास्यरसस्यास्वादनं सुलभम्। प्रथमं तावत्तु सिन्दूराञ्चितश्मश्रुः पीतवस्त्रधारी दधिविलिप्तललाटः कज्जलोपचित-कपोलो विदूषकः स्ववेषेणैव हास्यास्पदं जायते। प्रसाधनेनानेन समलङ्कृतं विदूषकं दृष्ट्वा वामनक इत्थं कथयति—

वामनकः—साधुब्राह्मण साधु शोभसेऽनेन प्रसाधनेन।

विदूषकः—अपेहि रे दास्याः पुत्र, उपहससि माम्।

वामनकः—न उपहसामि ननु जरठभल्लूक इव साधु शोभसे, इति भणामि।

विदूषकः—ननु त्वं कुतो मण्डूक इवानेन जीर्णचेलेन परिवृतो भ्रमसि।

नाटकेऽस्मिन् वीररसो विजृम्भते। दमयन्त्यर्थं दूयमानहृदयो नलश्चतुर्थाङ्के नेपथ्यात् 'आस्ते कोऽपि यदि क्षमः स कुरुतां कोदण्ड-दण्डं करे, इति वचनं निशम्य धनुषि समन्त्रकं बाणमध्यारोप्याकाशे शरं विमुञ्चन्नित्थं वक्ति—

येनोदितास्तु पशुना पिशिताशनेन,
वर्णाः स्वगर्वपिशुनास्त्वरितं तदीयम्।
पीत्वा प्रसह्य रुधिरं हृदयस्य तूर्णं,
तूणीरमाव्रजतु शब्दभिदेष बाणः॥

वीररस-गर्भिते निःसंशयं नलोक्तिः। षष्ठाङ्के महोत्पातानां वर्णने भयानकरसस्य निर्वाहः कृतः कविना। करुणो रसः सप्तमाङ्क एव दृश्यते यत्र दमयन्त्यास्सखीभिर्नल उपालभ्यतेः—

हा सोमवंशांकुरनैषधेन्द्र प्राणांस्त्यजन्तीं दयितां तवेमाम्।
किं नाम नाश्वासयसे समेत्य द्यूते हृता ते करुणापि किं वा॥

## छन्दोऽलङ्कारौ

नाटकेऽस्मिन् स्वल्पेष्वेव छन्दःसु श्लोका रचिताः। मालिनी कवेः प्रियं छन्दः, इति मालिन्या बहुवारप्रयोगतो ज्ञायते। शिखरिणीशार्दूलविक्रीडितादिषु छन्दःसु कतिपया एव श्लोकाः विनिबद्धाः। अनुप्रासोत्प्रेक्षाद्यलङ्काराणां प्रयोगे कविः पूर्णपेशलो वर्तते। द्वितीयाङ्के दमयन्ती प्रियसखीं कमलां प्रति दृष्टं स्वप्नं कथयति। तत्रानुप्रासोत्प्रेक्षादीनामलङ्काराणां प्रयोगः परिलक्ष्यते।

अनुप्रासो यथा —

अत्रान्तरे तरलतारकतारहारे।
तारापथे तरणिरश्मिरुचस्तरन्त्यः॥

उत्प्रेक्षा यथा—"ततश्च समाकर्षतीव हृदयं विधुरयतीव धैर्यं कीलयतीव प्रेमानुबन्धं श्लथयतीव शीलं विदूरयतीव व्रीडां तस्मिन् हृद्गते तरुणे विन्यस्तभावनाऽहं कथंकथञ्चिन्मधुकरकुलनिपीयमानकमलिनीपीयूषे प्रत्यूषे साकमम्बया सारससरसकेलिकौतुकाकुलिताम्भसि सरसि स्नातुमयासिषम्"। उत्प्रेक्षावर्णनमिदं कविशेमुषीशाणस्य बाणस्यौपम्यकोटिं नाटककारं प्रापयति।

## भाषाशैली

नाटकस्यास्य भाषा सुसरला ऋजुतरा विशुद्धा व्याकरणदोषशून्या च। भावाभिव्यक्तीनां न कुत्रापि प्रतिरोधः। नाटककारेण समासान्तपदावल्या विरलप्रयोगेण वैदर्भी-रीत्यनुसरणमात्मनः प्रकटितम्।

## प्रकृतिचित्रणम्

शर्मणः प्रकृतिवर्णनं मधुरं सरसं च। प्रकृतिवर्णनं वीक्ष्य रसिकहृदयमानन्दसागरे निमज्जतीव। कविः प्रकृतेरुग्ररूपं प्रत्याकृष्टो न भवति। किन्तु तस्यास्स्वाभाविकं वर्णनं कृत्वा परमशान्तिमादधाति। कुत्रचित् प्रकृतिचित्रणमपि श्रृङ्गारकूर्चिकया रञ्जयन् कालिदासमाघहर्षादीन् कवीन् समधिगच्छति। नाटकेऽस्मिन् नीलोत्पलानां मानसागतराजहंसानां तपोवनोपकण्ठं रामणीयकदृश्यानां च वर्णनं प्राप्यते। तद्यथा—

मृगदृशो नयनश्रियमर्जितं,
स्फुरदलिव्रजपक्षसमीरणात्।

तरलतामनुरूपमधीयते,
श्रितजडा न वहन्ति रुचं तु ताम् ॥

राजा नलः सर्वत्रैव प्रकृतावपि दमयन्त्या अनुकरणं पश्यति। कुत्रचिद् राजहंसाः दमयन्त्याः गतिमनहर्तुम्, कुत्रचिद् नीलोत्पलानि तस्याः नयनश्रियमर्जितुं च प्रयतन्ते किन्तु व्यर्थमेव। तथापि हंसानामेका किञ्चित्तस्याः गत्यनुकृतिः तस्य कौतूहलं जनयति। तद्यथा—

चिररतिपरिखिन्नो वामतश्चञ्चुकोटिं,
नवकिशलयरम्यामंसभागे निवेश्य।
चरणमपरमुर्व्यां दक्षिणं कन्धरायां,
विदधदयति निद्रां स्वर्णभृङ्गारशोभः ॥

एकस्मिन् स्थले तपोवनस्य स्वाभाविकवर्णनमपि प्राप्यते, यत्र क्वचित् हारीतकाः मरीचपल्लवं कवलयन्ति, क्वचित् मत्तपारावताः दयिताधरं धयन्ति, क्वचित् रसालमुकुले पिकैः रसभरः पीयते च। अनया रीत्या प्रकृतेः बहून्यङ्गान्युपवर्णितानि सन्ति। तृतीयाङ्कस्यावसाने विभावर्याः चित्रणमत्यन्तमनोहरं विद्यते।

तद्यथाः—रतिपरिचयताम्यद्वामनेत्रास्यपद्म-
श्वसितपरिमलौघे भ्राम्यतां भृङ्गयूनाम्।
न लघुरपि विभेदो लक्ष्यते गुञ्जिताना-
मपि कलभणितानां सुभ्रुवाणां गवाक्षैः ॥

## नाटकोपरि पूर्वकवीनां छाया

नाटकेऽस्मिन् हर्षवर्धनभट्टनारायणादीनां प्रभावो दृश्यते। भट्टनारायणेन वेणीसंहारनाटकस्य द्वितीयाङ्के पताकास्थानकगण्डादिनाटकीयसंकेतानां (Dramatic Irony) प्रयोगः कृतः तादृश एवास्मिन्नाटकेऽप्युपलभ्यते। वेणीसंहारनाटके यथा—

कञ्चुकी—देव! भग्नं भग्नम्।
राजा—केन।
कञ्चुकी—भीमेन।
राजा—कस्य।
कञ्चुकी—भवता।

राजा—आः किं प्रलपसि ।

भानुमती—आर्य किमनिष्टं मन्त्रयसे ।

राजा—धिक् प्रलापिन्, वृद्धापसद, कोऽयमद्य ते व्यामोहः ।

तथा नैषधेऽपि —

कञ्चुकी—देव ! नाशितम् ।

राजा—अये ! केन ।

कञ्चुकी—देव बन्धुना ( इति व्याकुलतां नाटयति )

राजा—( सक्रोधम् ) धिग्वृद्धापसद, किमस्थाने प्रलपसि ।
ननु जरया समं तेऽङ्गैर्मतिरपि शिथिलीकृता ।

कञ्चुकी—( सभयम् ) देव ! वदामि नाशितं बन्धुना सर्वम् ।

राजा—आः मूढ ! ननु स्फुटमभिधीयताम् । किमेवमसंगतं प्रलपन्नसम्भ्रान्तोऽसि ।

कञ्चुकी—( सत्रासम् ) देव ! ननु सर्वं श्रूयताम् ।

राजा—कथय ।

कञ्चुकी—नाशितं बन्धुना सर्वमुद्यानं मरुतस्तव ।
रोदोऽन्तरवलज्ज्वालाजालैर्दलयता जनान् ॥

एकस्मिन् श्लोके हर्षविरचितरत्नावलीनाटिकया भावसाम्यं स्पष्टं परिलक्ष्यते । रत्नावल्यां मर्कटोत्पातस्य धीरनैषधे महोत्पातस्य वर्णनसाम्यं स्पष्टमेव । तद्यथा—

ज्वालाजालैर्जनानां ज्वरमुपजनयञ्जातवेदाः समिन्धे,
देवश्चायं विवस्वान्मलिनतरघृणिर्दृश्यते लग्नकीलः ।
आशाश्चेमा न भान्ति प्रचुरतररजोराजिसंछादिताङ्गा,
धात्री पात्री भवन्ती विदल ति मनो वेपथूनामियं नः ॥

अनेन प्रकारेण पश्यामो वयं यत् नाटकमिदमतीव शोभनम् ।

# "आधुनिकसंस्कृतसाहित्ये पारिजातहरणकथा"

गौतमप्रसाद मिश्रः

आपौराणिकसाहित्यादर्वाचीनसाहित्यं भगवतः श्रीकृष्णस्य तत्सम्बन्धिकथानां च महत्त्वं दिनानुदिनमुपाचीयत। भारतस्य विभिन्नानां प्रान्तीयभाषाणां साहित्येषु कृष्णसम्बन्धिकथानां प्राधान्यमवमानयितुमशक्यम्। तास्वपि च "पारिजातहरणकथा" कवीनां पाठकानां श्रोतृणां च चेतांसि भृशं विलोभयति। आधुनिक इतिपदाभिहितसंस्कृतसाहित्यस्य कविनाट्यकारादिभिर्विरचितेषु ग्रन्थेषु सेयं कथा कथं विकासं गतवतीति प्रदर्श्यतेऽनेन निबन्धेन।

पारिजातहरणकथया भारतीयानां मानसं बहु समाकृष्टमिति नास्त्यत्र विदुषां विसंवादः। एकतो भगवता श्रीकृष्णेन सहास्याः संबन्धोऽपरतश्चास्यामनेकानां रसानां समवायो जनेष्वस्याः प्रियत्वं द्योतयति। पौराणिकैः कविभिर्भक्तजनैश्च नव-नव-कल्पनया प्रदत्तेष्वस्यै बहुरूपेष्वतीव सरसमनोरमे द्वे रूपे पुरस्तादवतार्येते।

## प्रथमा कथा

केयं पारिजातहरणकथेत्याकांक्षायां संस्कृतसाहित्ये हरिवंशपुराणस्य विष्णुपर्वणि चतुःषष्टितमादध्यायादारभ्य पंचषष्टितममध्यायं यावत् कथायाः प्रथमं रूपं प्राप्यते। अस्यानुसारं कदाचिदुपकृष्णमागत्य देवानामुत्पीडकं नरकासुरं हन्तुं देवेन्द्रेण संप्रार्थितो भगवान् श्रीकृष्णो युधि तं निपात्य तेनैवापहृतं देवमातुरदितेः कुण्डलं देवानां च रत्नानि प्रदातुं दिवौकसलोकं जगाम। तत्र देवाभ्यर्थितः ससत्यभामः स द्वारकामायन् पारिजातगुणलुब्धो नन्दनवनात् पारिजाततरुं जहार। वनपालकैः वृत्तमिदं निवेदितोऽपि सुरेशः कृष्णस्यैतत् कर्माऽनुमेने। ब्रह्मविष्णुभागवतादिषु पुराणेषु च ज्ञातपारिजातहरणवृत्तस्येन्द्रस्य कृष्णेन सह युद्धं समभवदिति वर्ण्यते।

## द्वितीया कथा

हरिवंशपुराणस्य विष्णुपर्वण्येव षट्षष्टितमादध्यायादारभ्य नवसप्ततितममध्यायं यावत् द्वितीयं पारिजातहरणकथाया रूपमुपलभ्यते एतदनुसारं कलहप्रियो नारदः कदाचिदेकमेव पारिजातपुष्पमानीय कृष्णाय प्रादात्। तेनापि च तत्पुष्पं रुक्मिण्यै समर्पितम्। अनेन वृत्तान्तेन व्यथिता कृष्णस्य प्रियपत्नी सत्यभामा मानातिरेकमभजत्। तां हि प्रसादयितुं श्रीकृष्णः स्वर्गात् पारिजातापहारमकार्षीत्। इयमत्र प्रक्षिप्तेति डा० पी० यल० वैद्यमहाभागानां मतम्।

## कथाया विकासस्य निदानम्

आचार्यैः कृष्णस्य भक्तिर्वैष्णवधर्मभावना च यथा-यथा लोकेषु प्रचारिते, दृढे बद्धमूले च कारिते तथा-तथा प्रदर्शितरूपायां पारिजातहरणकथायामाकविपामरमतिवेलमनुरागातिशयं संवर्द्धतेस्म। सैव च पुरः पुरस्फुरणोन्मुखी कृष्णचरितोपनिबद्धा भक्तिराधुनिकसंस्कृतसाहित्ये पारिजातहरणकथाया विकासस्य कारणम्।

## पारिजातनाटकम्

आधुनिकसंस्कृतसाहित्यपरिधौ पारिजातहरणकथा कविषु प्रथमं तंजापुरस्य रघुनाथनायकस्य कुलगुरुः कुमारताताचार्यः (१६१४-१६३३) समापतति[१]। सुगृहीताभिधेयेनानेन कविनाटककारेण रघुनाथनायकस्यानुरोधमनुसृत्य पञ्चाङ्कं "पारिजातनाटकं" विरचितम्। नाटकेऽस्मिन् हरिवंशपुराणान्तःपातिन्योः प्रथमद्वितीयकथयो रुचिररसावर्द्धिपरिवर्तनैरभिनवतामापाद्य साधु समन्वयो नाटककारेण सम्पादितः। तद्यथा-कलहाभिलाषिणा मुनिनारदेनकृष्णेन्द्रौ योधयितुमेकमेव पारिजातपुष्पमानीय बहुवल्लभाय भगवते कृष्णाय प्रदीयते। नारदेनैव सत्यभामायै कृष्णकृतरुक्मिणीसम्मानोदन्तोऽपि निवेद्यते। विदूषकेण सह श्रीकृष्णो मानवतीं सत्यभामां सरसं प्रसादयति प्रतिशृणोति च स्वर्गात् पारिजातमपहर्तुम्। अतः परं मूलकथानां कृष्णेन इन्द्रात् पारिजातं

---

(१) पा० ना० (कु० ता०) सरस्वतीमहालपुस्तकालयतंजौरप्रकाशित भूमिका (देवनाथाचार्य) पृ०—२०

प्राप्तुं प्रयत्नो विधीयते । परञ्च नाटकेऽस्मिन् नरकासुरोत्पीडिताः ऋषयः प्रविश्य नरकासुरं हन्तुं कृष्णं प्रेरयन्तीति प्रकारान्तरेण प्रथमकथा अत्र द्वितीयया कथया सहान्वीयते । अतः परमत्रैव नरकासुरापहृत षोडश-सहस्रकन्यानामुदन्तोऽपि नाटकस्यास्यतृतीयेऽङ्के राजहंसनामकेन केनचिद् दूतेन तासां मदनलेखनानि चित्राणि च कृष्णस्य समक्षमुपस्थाप्य प्रवर्तमानया कथया सह संबद्ध्यते ।

पुराणेषु लोकेषु च यथाप्रसिद्धं पात्राणां चरित्रं सुस्पष्टं विधातुमत्र प्रयत्नानां कूटोऽवलोक्यते । यद्यथा नारदः कलहप्रियो युद्धप्रवर्तको वेति कः खलु न जानीते ? अस्मिन् नाटके नारदस्यैतच्चरित्रमेवं व्यज्यते—नारदः प्रविशन्नेव सूर्योपस्थानकालेऽपि महतामायोधनं द्रष्टुमिच्छति । किं बहुना सूर्यमपि स एतावतैव धन्यं मनुते यत् सृष्टेरादिकालादेवानेन बहु नाम प्रधनमवलोकितम् । आत्मनो वाणी शृङ्गारवीरोज्ज्वलेति स्वयमेव कुमारताताचार्येण स्वीकृता एव । हास्यस्यापिसंविधानेऽयं नाटककारो दत्तावधान एव दृश्यते । तथा हि—स्वसौन्दर्यं प्रेक्षितं दर्पणे दत्तदृष्टेः विदूषकस्येयमुक्तिर्यत्—भो वयस्य, रक्ष, रक्ष माम् वृद्धशार्दूलात्—कियती हास्यरसव्यंजिकेति सहृदयैरनुभूयताम् ।

दृश्यानामलंकाराणां च प्रकल्पनेऽपि कविना मूलकथातो बहु नवत्वमापादितमत्र । स्वर्गात् परिजातमपहृत्य भूमिमापतद्भिः कृष्णादिभिः समग्रं भारतं गगनस्याधोऽध्वनो दृश्यते सालंकृतिभाषया वर्ण्यते च । अलंकाराणां संविधानेन पात्राणां संवादेषु च अनल्पमोजः अन्ये च गुणाः प्रतिष्ठापिताः ।

यथा हि—

नरकासुरः अरे रे जाल्म ?

पञ्चैव तव पुष्पाणि मृदूनि क नु मार्गणाः ।
प्रयोज्या मृदुगात्रेषु क मे वज्रसमाः शराः[1] ॥

प्रद्युम्नः ( सस्मितम् )

पञ्चैव तव च प्राणाः पञ्चैव च शरा इमे
पन्नगेन्द्रप्रतीकाशा वैषम्यं नात्र लक्ष्यते ।[2]

---

१—पा० ना०, ४, ४३ । २—तत्रैव, ४, ४४ ।

नाटककारोऽसौ स्वसमकालीनां लोकदुरवस्थामपि नोपेक्षते। आवृ-तीयाङ्कं कृष्णस्य चरित्रमस्मिन् नाटके तत्कालीनानां राज्ञामेव चरित्रं व्यंजयति, यैर्हि प्रजापालनं सर्वं च स्वविधेयं विहाय भोग एव प्राधान्येन वृतः। किन्तु

> चन्द्रोऽहमिति मानेन चन्द्रिकावरणं शशी
> अम्बुदेन न जानाति जगतस्तद्भाग्यता ॥[१]

इति ऋषिवचनमनुसृत्य कर्तव्यं प्रति प्रबुद्धं श्रीकृष्णमादर्शनृपतिमिव प्रतिपाद्य नाटककारेण लोकोपकारकः पन्थाः प्रदर्शितः।

## पारिजातहरणमहाकाव्यम्

अथातः परमष्टादशशतके ऊनविंशशतके च न कस्यापि कवेरिमां कथामाश्रित्य काचिद्रचनोपलभ्यते। अस्मिन् विंशतितमे शतके उत्तर-प्रदेशान्तर्गतदेवरियामण्डलनिवासी उमापतिशर्मद्विवेदः एकविंशसर्गात्मकं "पारिजातहरणमहाकाव्यम्" विरचितवानस्ति[२]। अनेनापि कविना हरिवंशपुराणान्तःपातिन्योर्द्वयोः कथयोः समन्वयो विहितः। नारद उप-कृष्णमागत्य तस्मै एकं पारिजातपुष्पं ददाति निवेदयति च नरकासुरकृतं देवानामुत्पीडनम्। अतः परं हरिवंशपुराणस्य द्वितीयैव कथा पारिजातार्थं कृष्णेन्द्रयोर्युद्धपर्यन्तं प्रसरति। अत्रैव नरकासुरवधकथा प्रवर्तमानया मुख्य-कथया सह संयोज्यते। कृष्णेन्द्रौ युद्धान्निवारयद्भ्यामदिति-कश्यपाभ्यां नरकासुरं हन्तुं कृष्ण उत्साह्यते। कृष्णो नरकासुरं निपात्य षोडशसहस्रकन्यका उद्धारयति। महाकाव्यलक्षणमनुसृत्य महाकविना सर्गेषु कथाया विभाजनं, प्रतिसर्गान्तं छन्दःपरिवर्तनं, विविधप्रकारकं वर्णनं, अनेकानां रसानां च संगमनं संपादितम्।

श्रीकृष्णो नायकः सत्यभामा चात्र नायिका। रुक्मिण्याश्चरित्रमत्र सत्यभामायाश्चरित्राद् बहुवैशिष्ट्यमावहति। एतेषां माधुर्यौजः परिपूर्ण-कर्म निरूपयता महाकविना हरेर्गुणाख्यानं निरूप्य निर्वेदेन ग्रन्थं समाप्य शान्तरसस्य प्राधान्यं संकेतितम्। ग्रन्थस्यान्ते भावातिरेकं भजतः कवे र्मौनस्यायमेवाभिप्रायस्तद्यथा—

---

१—तत्रैव, ३, १। २—चौखम्बा, वाराणसी प्रकाशितम्।

रसोद्रेकादेवं भगवति विलासं श्रुतवति,
प्रतिस्वं भिन्ना सा प्रकृतिरिह लीनास्तसकला।
कवेर्वाग् देवीयं तदमलपदाब्जस्मृतिमयी,
महाभावे मग्ना प्रसरति सुभद्राऽपि न परम्।[१]

समाजे कस्य किं कर्तव्यमिति प्रदर्शयतानेन महाकविना गृहस्थं प्रति तावदुक्तम्—

यत्तु सन्तोऽनुगृह्णन्ति यच्च गृह्णाति सत्तमान्।
तद् गृहं तद् गृहं मेऽद्य न गृहं स्वाश्रयास्पदम्॥[२]

महाकविरप्ययं स्वीकुरुते यत् गृहस्थाश्रमः एका लोकोपकारिणी संस्था यस्य स्वार्थायोपयोगः पापायैव। तद्यथा—

ये गृहाश्रमसौख्यानि स्वतमेवोपभुञ्जते।
लोकोपकारिसंस्थायास्ते सर्वस्वहृतोऽघिनः॥[३]

अपि च राष्ट्रं राष्ट्रस्य सम्पत्तिं च रक्षितुं कविपतेरधस्तनः सन्देशः—

...................................
शूरो जिहासति नहि श्रियमात्मनीनां।
प्राणैः प्रयस्य निजदेशविभूतये स्यात्
स्वामी पराक्रमणवारिपराक्रमोऽर्हः॥[४]

एवं महाकाव्यं संपादयतानेन महाकविना न किमपि अनावश्यकमनुचितं चोपस्थापितं नापि चावश्यकं परित्यक्तम्।

## भर्तृदानम्

पारिजातहरणकथाया अन्तिमः किन्तु कथासंघटनाचतुरः कल्पनाचणश्च कविरस्ति शिरोमणिः सन्निधानं सूर्यनारायणशास्त्री[५]। अनेन स्वरचनाया यद्यपि "भर्तृदानम्" इति संज्ञा कृता तथापि तत्र पारिजातहरणकथा सर्वोत्कर्षेण विद्यते। षष्ट्यधिकशतश्लोकात्मकेऽस्मिन् लब्धाकृतौ खण्डकाव्ये हरिवंशपुराणान्तःपातिन्यौ पारिजातहरणपुण्यकव्रतकथे रमणीयरीत्या विन्यस्ते स्तः। सत्यभामां प्रसादयितुं पारिजातहरणोद्यत-

---

१—पा० हरण० २१, ८१। २—तत्रैव ४, ११२। ३—तत्रैव ४, ११४।
४—तत्रैव १६, २०। ५—हिन्दी प्रेस, नामपल्ली, स्टेशनरोड, हैदराबाद आन्ध्रप्रदेशतः प्रकाशितम्

कृष्णाय इन्द्रः युद्धं विनैव पारिजातं प्रयच्छति। अतः परं स्वसौभाग्याधिक्यादुत्सेकवतीं कृष्णं च साधारणं लौकिकं च पुरुषं मन्यमानां सत्यभामां सपत्नीनां समक्षमेव ह्रेपयितुं कृष्णस्तु भगवान् स्वयमिति तथ्यं विज्ञापयितुं च नारदः सत्यभामया पुण्यकव्रतं कारयति। व्रतेऽस्मिन् सत्यभामा नारदाय कृष्णं प्रतिगृणाति। पुनः कृष्णभारसमभारवद्भिर्द्रविणैः संतोल्य कृष्णं मोच यितुं सत्यभामया सर्वं स्वधनं प्रयुज्यते न तु तत् कृष्णभारसमं जायते। वृत्तमेतदवलोक्य दुःखाश्चर्यविषण्णा सत्यभामा कृष्णं मोचयितुं सपत्नीः प्रार्थयति। रुक्मिणी च तां प्रति—

न कृष्ण साधारणपूरुषः स्वसः।
पतिः स भगवान् परमात्परो नौ॥[1]

इति कथयन्ती एकेनैव तुलसीपत्रेण संतोल्य श्रीकृष्णं मोचयति। अनेनाननुभूतवृत्तान्तेन विस्मयपरवशा सत्यभामा कृष्णस्य परमात्मतत्त्वं विज्ञाय रुक्मिण्या नारदकृष्णयोश्च चरणौ वन्दमाना सपश्चात्तापमज्ञानकृतापराधं क्षमापयति।

महाकविकालिदासस्य रीतिमनुधावता शास्त्रिमहोदयेनातीवसरलभाषया प्रसादगुणयुक्तं काव्यं निबद्धम्। भाषायाः सारल्यं काव्यसौन्दर्याभिवर्द्धनायैवात्र अनुभूयते। नारदकृष्णाभ्यां रुक्मिण्याः कृतं सम्मानं स्वीयं चापमानमाकर्ण्य सत्यभामाया भावव्याकुलोक्तिरत्र कवेः काव्यकौशलमनुभावयितुमुदाह्रियते—

"कथं पुनर्ब्रूहि पुनश्च कथ्यताम्
प्रजल्पितं यत् कलहाशयोगिना।
श्रुतं श्रवःपेयमिदं मुरारिणा ?
किमाह रुक्मिण्यपि गूहसे कुतः॥[2]

असंभवं नाम वृत्तं संभवं श्रुत्वा मानवमनसि एकपद एव जातानां भावसंदोहानामभिव्यक्तये अनुपमेयं रीतिः। नारदेन वंचितायाः सत्यभामाया उक्तिः कियती समीचीना कियच्च तत्र काव्यसौन्दर्यमिति सुधियो विभावयन्तु—

---

१—भर्तृदानम्—पृ० ३४
२—तत्रैव—पृ० १०

किरातगीतेन यथा मृगी वत !
यथा झषी धीवरजालकेन च ।
वचोभिरेतस्य शठस्य मौनिनो
हता हतेत्यश्रुमुखी रुरोद सा ॥[१]

संस्कृतेरखिलभारतीयव्यापकत्वं, सामाजिकादर्शैकनिष्ठत्वं बहु ऐतिहासिकं च तथ्यं स्पष्टं द्रष्टुं शक्यन्ते। चतुःसहस्राधिकवर्षेभ्योऽपि प्राक्तनकालात् प्रवहमाना संस्कृतसाहित्यस्याजस्ररसधारा अद्यापि यथापूर्वमेव प्रवहतीति प्रमाणयितुमेतेषां ग्रन्थानां महनीयं महत्त्वं वरीवर्ति। विभिन्नधर्मावलम्बिभिरनेकभाषाभाषिभिश्च विपन्नीकृतं संस्कृतसाहित्यं, संरक्षणाभावात् स्तम्भिताः कवीनां लेखन्यः नेयमर्थकरी भाषेति विनिश्चित्य तदध्ययनाद् विमुखीभूतश्च जनसन्दोहः। एतादृशेऽनवलोकनीयान्तविषमे क्षणे आसन् केचन ऋषितुल्याः कवयो यैः मध्येमरुस्थलं सरस्वत्या मधुमयी रसधारा संरक्षिता। अनपेक्षितक्रूरकालानामेतेषां महर्षीणां त्यागातिपूर्णप्रयासानामेव सुफलं यदस्माकं परतन्त्रताकालः संस्कृतसाहित्यस्य द्वितीयान्धकारयुगपदेनाभिधातुं न शक्यते। बहवः काव्यग्रंथाः प्रतिभावन्तः कवयश्च देशकालान्धःपटात् पारं निलीना इति द्रढीयसी संभावना। अतो यावत् तेषां ज्ञानस्य साधनानि न लुप्तानि भवेयुस्तावदेव क्षिप्रं तेषां गवेषणात्मकमध्ययनमस्माभिः क्रियतामित्यस्माकमपरिहार्यं कर्तव्यमिति कः सन्देहः।

———

१—भर्तृदानम्—पृ० ३०

# संस्कृतपत्रिकासु गद्यकाव्यस्य विकासः

( १८६६ ई०-१९६५ ई० )

हीरालाल शुक्लः

संस्कृते गतनवनवतिवर्षेषु विविधविषयिणीषु पत्रिकासु गद्यकाव्य-संस्कृतराशीनवलोक्य सहसास्माकं मनः तस्मिन् बृहद्गद्यकाव्यपयोनिधौ निमज्जति, यस्मिन्हि विधाधाराततिः, नैककूलस्पर्शिन्यः रागात्मिकोर्मयः, अङ्केषु मुक्तारत्नानि, सीमस्थदेवचरिताङ्कनान्यवलोक्यन्ते। एवं हि गद्यरीतेरनेकतायास्तत्स्वरूपवैविध्यस्य चैको विशालः सागरः पत्रिकेतिहासे चकास्ति। तत्र निबन्धकल्पं गद्यकाव्यं चिन्तनाशक्त्यापूरितं स्वच्छन्दं नवजीवनमादधाति, कथानाटकयोर्द्वारेणापरत्र सुखदुःखे उद्भावयति च। प्रकाशिता अविकलाः समाचारास्तत्र कुत्रचिज्जीवनस्य बीभत्सतायाः दृश्यं, क्वचिदमृतमयं सौन्दर्यं प्रकटयन्ति। वैनोदिकस्तम्भाधारं गद्यं कुहचिदुन्मुक्तहास्यधारयास्मान्निःसंशयमाह्लादयति। गद्यस्यास्यास्त्येकं तद्रूपमपि यत्र सम्पादकमभिलक्ष्य विविधानि पत्राणि, असंख्यहृदयानां सन्तापं, तत्समस्याश्च विषयीकृत्य प्राणान्स्पन्दयन्ति। तत्त्वत इत्थं गद्यकाव्यप्रकारः पत्रिकास्वेतासु स्वरूपवैभिन्न्यमाकलयन्नस्माकं पुरतो वर्तते।

सम्पादकीयाः लेखाः पत्र-पत्रिकासु विशेषतो महत्त्वाधायकाः। भवेन्नामैतादृशस्य लेखस्य मासिकपत्रिकासु अभावसंभवः, किन्तु साप्ताहिक-दैनिकपत्रिकासु न कथमपि स सुसहः। सम्पादकानामग्रलेखैः पत्र-प्रकारः पत्रवैशिष्ट्यमित्येते सर्वेऽपि सुतरां बोधविषयीभवन्ति। मासिक-पत्रिकाणां सम्पादकीयमितिवृत्तं साहित्य-संस्कृतिसीमानिबद्धम्। एतावता कारणेन गद्यं गभीरं, परिनिष्ठितं महत्त्वाधायकञ्च भवति। साप्ताहिक-दैनिकपत्रेषु प्राप्तं गद्यं कुत्रचिन्मर्मभेदकम्, कुत्रचिदाक्रोशव्यञ्जकम् अन्यत्र गम्भीरं, क्वचिद्विशुद्धसाहित्यचेतनापरिकल्पितमाभाति।

मासिकपाक्षिकपत्रिकासु सम्पादकीयं वृत्तं गद्यात्मकमिति आरम्भतः परिलक्ष्यते। एतादृशस्य गद्यस्यादिमं स्वरूपं पौराणिकपद्धतिमनुसरति। गद्यमेतत् सम्पादकीयलेखेन स्वविकासक्रमस्य सोपानमधितिष्ठति, एतत्तु

निश्चप्रचम् । १८७३ ऐशवीयाब्दस्येदृशः सम्पादकीयोऽशतः प्रस्तूयते :—

"अहो पश्यतामेवास्माकं १८७२ खिष्टाब्दः पूर्णतामगमत् । सममेतेन विद्योदयस्यायुषः प्रथमवर्षमप्यतीतम् । अस्माकमायुषश्च तावानेव क्षयः संजातः । प्राचीनपाठकैः सहास्माकं परिचयस्य पुनर्वर्षपरिमित-माधिक्यं जातम्[१] ।।"

कदाचिदेकस्मिन्नेव पत्रे प्रकाशितं सम्पादकीयं वृत्तं गद्यस्य द्विरूपत्व-मधिगच्छदस्मानुद्वेजयति । एकेनोदाहरणेन तथ्यमेतत्सर्वथा स्फुटी-भविष्यति :—"अयि महाशयाः ! सम्प्रति कलिकलुषिते भारते गैर्वाण-भारतीमल्पतरप्रचारामालोच्य, तस्याः सम्वृद्धये श्रीनानूलालश्रेष्ठिवर-साहाय्यमवलम्ब्य श्रीमदुपेन्द्रस्वामिभिः प्रवर्तितायाः काव्यकादम्बिन्याः पूर्णो वत्सरो विजयतेतरामिति प्रथमं तेभ्यो धन्यवादं दातुमुत्सहते चेतः । महान्तः परोपकृतिनो भवन्ति भवति च कीर्तयेऽन्योपकारः इति प्राचीनवादस्योदाहरणभूताः श्रीमदुपेन्द्रस्वामिनः काव्यकादम्बिन्या सहानुपमसुखजातं शतं समास्समनुभवन्त्विति जगन्नियन्तारमनुवेलम-भ्यर्थये । अपि च नासत्याविव रससंभृतौ श्रीगोपालशास्त्रिविद्यापति-शास्त्रिणौ सभामेतां समनुगृह्य स्थितप्रायामकुरुतामिति ताभ्यामपि पर-श्शतानि धन्यवचनानि दातमुत्सहे[२] ।"

अस्यैव पत्रस्य द्वितीयं सम्पादकीयमोजस्समासभूयस्त्वं श्लिष्टत्वञ्चा-भजते । यथा :—"अनुग्राहका अनुग्राहका मासिकपुस्तकस्य भविष्य-न्तीति सुव्यक्तमेव, यदियं सरसीवातीव कठोरसौरगवीविकलीभूतचेत-स्केभ्यः सुधास्रावं वितरन्ती, अलकेव श्रेष्ठिनानूलालसमाश्रिता, जनक-नन्दिनीव रघुपतिसमादृता, कमलासनेव पुरुषोत्तमोल्लासं तन्वती, पाक-शासनास्थानीव विद्यापतिसमलङ्कृता, वृन्दाटवीव गोपालपदन्यास-मनोरमा, रमारमणमतिरिव रात्रिन्दिवं शम्भुमभिकांक्षमाणा, पांचालीव धर्मानुगृहीता, [ संसदननुभूतिरसास्वादानां विप्रकृष्टाऽपि प्रकृष्टा क्रियते

---

१—विद्योदयः, जनवरी १८७३

२. काव्यकादम्बिनी २५ जून १८६८

संख्यातिगैः संख्यावृद्धिः श्लोकैः साहाय्यमाचर्यतेऽस्याः सभायास्तथा ]
रसास्वादचंचुभिरितरैर्जनैर्वसुदानेन पूरणीयेयं काव्यकादम्बिनी ॥"[१]

इत्थं मासिकपाक्षिकपत्रिकाणां सम्पादकीयं गद्यं द्विविधपद्धति-व्यापृतं चक्षुषोर्विषयीभवति। क्रमेणेयं सरणिः विकाससोपानमधि-रोहन्तीवाग्रतः प्रसरति। विंशशताब्द्यां सम्पादकीयगद्यस्य क्लिष्टशब्द-प्रयोगोऽनुक्रमं ह्रासतां गतः। अथ च सरलया गिरा भावप्रकाशन-क्षमतामध्यगात्। वाक्यरचनायाः शैथिल्यं भाषाया अलङ्कारादीनां प्रयोगैः दुर्बोधत्वञ्च निरगात्। तदानीमूनविंशशताब्द्याः लेखपद्धतिः या किल पाण्डित्यदर्पायिता कतीनाञ्चित् संस्कृतप्रौढज्ञानजुषां जनानामाह्ला-दिकासीत्सैव विंशशताब्द्यामारम्भे सारल्यमाकलयन्ती समेषां गीर्वाण-प्रणयिनां हृदयहारायिता। एतादृशस्य गद्यस्य स्वरूपं १९०१ ई० वर्षतः १९१० ई० पर्यन्तं तत्तत्पत्रिकाणां सम्पादकीयलेखेषु उपलभ्यते। उदा-हरणमुखेन "अयमस्या मित्रगोष्ठ्या विश्वासः यल्लोके भाषया यद्यदिष्टं सम्भाव्यते, तत्सर्वं भारतीयानां पक्षे संस्कृतभाषयैव सुष्ठुतरं सम्पाद्यत इति। संस्कृतभाषयैव—हि भारतस्याद्यापि कथंचित्सर्वजनीनेति कथयितुं शक्यते, अनेनैव सर्वभारतीयैः सम्भूय विधीयमानः प्रयत्नः समग्रस्य भारतस्योपकाराय भवेत्। सकलकुशलैककारणभूतं ऐक्यं नाम भाषया चारुतरं संभाव्यते, प्रदेशान्तरवासी अपरप्रदेशवासिना अद्यापि केवल-मनयैव भारतीयभाषया स्वस्वाभिप्रायं प्रकाशयितुं प्रभवन्ति।"[२]

'भाषासु मुख्याया मधुराया गैर्वाण्याः परिपोषणोपायेषु प्रधानतमं पत्रप्रचारणमित्यालोच्य, अमरावतीग्रामाभिजनानां नवसालपुरीसचिव-पदमधितिष्ठतां विश्वविख्यातानां श्रीशेषशास्त्रिणामादेशानुरोधेन प्रतिमासं प्रचारितायाः अस्याः पत्रिकाया अयं खलु त्रयोदशवत्सरः। अत एव चेयं संस्कृतपत्रिका साम्प्रतं सहृदयाव्यपदेशमङ्गीकरोति।"[३]

"दूरेऽस्त्वीदृशामोदकपरिपूर्त्तिः, प्रसिद्ध्यन्त्या अप्यस्या न तावन्तो ग्राहकाः समपद्यन्त, येन मुद्रणव्ययोऽपि निर्वहेत्। केचित्पुनर्विलेख्यापि ग्राहकश्रेण्यां स्वयमेव स्वाभिधानं, स्वीकृत्यापि प्रतिमासमिमां स्तोक-

१. काव्यकादम्बिनी २५ नवम्बर १९९७

२. मित्रगोष्ठी, जुलाई १९०४

३. सहृदया जनवरी १९०८

मप्यस्याः मूल्यं मुहुः प्रार्थ्यमानाः नोत्तरमपि वितरन्ति, दूरतस्तु मूल्यमिति ।"[१]

पत्रिकाः किल विविधकोटिकाः पृथग्विषयालम्बिन्यः सविशेषोद्देश्याः प्राकाश्यं गताः । तत्र गद्यस्य वैभिन्न्यं विपुलतावहं वर्तते । तदानीन्तनानां पत्रिकाणां सम्पादकीयाः विविधभावनाभासुराः नैकाधाराः संस्कृतगद्यस्य विकासे सर्वथा समर्था इत्यत्र न कस्यचिद्वैमत्यम् । ई० १९१० वर्षादारभ्य १९६५ वर्षं यावत् मासिकपाक्षिकपत्रिकासु सम्पादकीयलेखानां प्रचुरता वर्तते । सर्वासु पत्रिकासु सम्पादकीयार्थमासीन्निर्धारितः स्तम्भः यत्र सम्पादकैः स्वीयं भाववैविध्यं व्यञ्जितम् । तथाहिः—"अधुनातनानां व्यवहाराभावेन संस्कृतभाषायाः मृतभाषोत्प्रेक्षणं तु व्यवहाराभा` व्यवहर्तुरेव दोषः कारणं न तु भाषादोष इत्यकिंचित्करम् । पुरतः स्थापितेषु स्वभावमधुरेषु फलेषु व्याधितस्य याऽनभिरुचिर्भवति, न हि तत्र फलदोषकारणम् । एवममृतभाषायाः मृतत्वमुत्प्रेक्षमाणा इमे मर्त्या आत्मानमेव मारयन्तीति मन्यामहे । सर्वथा चैहिकामुष्मिकफलोपयोगिस्वभावमधुरप्रकृतिगंभीरादिस्वभावेयं संस्कृतभाषा स्वोज्जीवनार्थं वार्तिककारोक्तरीत्या पाण्डित्यपरिषन्मेलनमेवाकांक्षत इति संस्कृतसाहित्यपरिषदियं संस्कृतभाषोज्जीवनेन सप्रयोजनेति पश्यामः ।"[२]

"केचनप्रान्तीयसर्वकाराः संस्कृतविषये उदासतेऽपरे च तत्प्रसारमपि प्रतिबन्धन्ति । केरलशासनं पालघटमहाविद्यालये संस्कृतस्याध्यात्मतत्त्वदर्शनस्य च शिक्षणविभागं व्ययाधिक्यावहमिति हेतुना निःसारयितुं प्रयतते इति ज्ञात्वा यत्सत्यमस्माकं संस्कृतप्रणयिनाञ्च चेतो रुधिरप्रदिग्धं भवति । एतादृशे विषये आयव्ययपरिगणना न युक्तरूपेति मन्यामहे ।"[३]

उपर्युदाहृतात् गद्यभागाद्दशवर्षानन्तरं गद्यं सम्पादकीयान्तर्भूतं निश्चितश्रेणीकं सदात्मानं विवृणोति । संस्कृतसाहित्यकाराणां पद्यात्मकाभिरुचिः आधुनिककाव्यशिल्पिनामाग्रहेण नवीनशैलीप्रस्थापनेन च गद्योन्मुखी सञ्जाता । सम्पादकैर्निर्धारिता नीतिः सत्यं गद्यमुखापेक्षिण्यासीदिति अधः उदाहृतैः कैश्चित्पत्रिकाणां नियमैः ज्ञायते:—"अस्यां च

---

१—सूक्तिसुधा, दिसम्बर १९०४

२—संस्कृतसाहित्यपरिषत्, मार्च १९१८

३—संविद्, १५ नवम्बर १९६४

ललितपदघटना अवश्यज्ञेयविषयभासुरा गद्यमयाः प्रबन्धा एव प्रायेण भवेयुरिति ।''[१] "अस्यां पत्रिकायां यद्यपि सर्वेषामपि सम्प्रदायानां ग्रन्था लेखाश्च प्रकाश्यन्ते । तथापि परस्परमाक्षिपन्तो लेखास्तु न कदाचिदपि केनापि प्रेषणीयाः । एतत् पत्रिकालक्ष्याविरोधेन सरलविशदं विलोक्य प्रेष्यमाणा लेखाः ससन्तोषं परिगृह्य प्रकाश्येरन् । गद्येष्वधिकतर आदरः ।''[२] "अस्यां प्रकाश्यमानायाः सर्वेऽप्युपन्यासाः प्रायेण गद्यमया एव स्युः[३] ।''

संस्कृतपत्रिकासु गद्यकाव्यस्य यानि विविधस्वरूपाण्युपलभ्यन्ते तानि सर्वाणि संकेतितानि ।[४] एतेषां गद्यस्वरूपाणां सम्यगधीतिरेवैतद्विकास-क्रमस्य वस्तुस्थितिपरिचायिका ।

केषाञ्चित्पण्डितम्मन्यानां कथनं यद्बाणभट्टानन्तरं संस्कृतगद्यधारा विलुप्तिमगच्छदिति, एतत्तु भ्रान्तम् बाणभट्टानन्तरम् असंख्याकाः बाणभट्टसमाः गद्यप्रणेतारः आधुनिकयुगे अजायन्त,[५] येषां कीर्त्तिः बाणभट्टादधिकेति मे द्रढीयान् विश्वासः ।

अस्माकं संस्कृतज्ञानामपरिहार्यमिदं कर्तव्यं यदस्माभिः ते भारतीपुत्राः गवेषणीयाः तेषां कृतयश्चानुशीलनीयाः । अतः परमेव 'संस्कृतज्ञ' शब्दाभिधानार्हाः वयं भवितुं शक्नुमः ।

संस्कृतज्ञानां किञ्चिदनवधानात् संख्यातीताः संस्कृतग्रन्थाः विलुप्ता अजायन्तेति ऐतिह्यं प्रमाणम् । वयं तेषां विषये अद्यापि ज्ञानशून्याः । यदि अस्माभिः आधुनिकसंस्कृतलेखकानां कवीनां चान्वेषणाध्ययने न विधीयेतां, तत्कालानन्तरम् एतान् समुद्धर्त्तुं जाकोबी-मैक्समूलर-विन्टर-निट्जादीनां जनिः आवश्यकीया भविष्यति ।

---

१—शारदा (शृंगेरीमठमैसूर) मार्च १९२७, संस्कृतभारती जनवरी १९२७, सुरभारती जनवरी १९२६, गीर्वाण जनवरी १९२४, मित्र जनवरी १९२३

२—पीयूषपत्रिका, जुलाई १९३१

३—कालिन्दी जनवरी १९३५, कौमुदी जनवरी १९३५, संस्कृतचन्द्रिका मार्च १९००, सूनृतवादिनी ७ मार्च १९०६, सहृदया जून १९०१

४—संस्कृतानुरागिणामस्माकं दौर्भाग्यादेवैतदद्यापि प्रकाशनमपेक्ष्यते ।

५—आधुनिकयुगेति शब्दस्य संस्कृतपत्रिकाप्रकाशनस्य प्रारभ्य इत्यर्थं विदांकुर्वन्तु भवन्तः । अयं कालः पत्रकारिता-युग' गद्ययुगो वाभिधातुं शक्यते।

# विगतपंचशताब्दानां शास्त्रकाव्यानां पर्यालोचनम्

श्री रुद्रदेवत्रिपाठी

## काव्यं तदीया विधाश्च—

यद्यपि साहित्यशास्त्रे व्यापकार्थकांक्षिभिर्गद्य-पद्ययोरुभयोरेव समानार्थे 'काव्य' शब्दः स्वीकृतस्तथापि साधारण्येन लोके पद्यबद्धरचनानामर्थे एव 'काव्य' शब्दो रूढिं गतोऽस्ति। 'कवेः कर्म काव्यमिति' व्युत्पत्तावस्यामपि कविशब्दस्य छन्दोबद्धरचनाकार एव प्रथितया काव्यमपि तथैवार्थं स्मृतौ जनयति। जीवनस्य विशृङ्खलिता अनुभूतीरेकीकृत्य यदा कविस्ताभ्यः शब्दार्थयोः साहाय्येन किमपि कलापूर्णं रूपं प्रयच्छति तदा काव्यस्य जन्म भवति। कवेर्भावनाभिव्यक्तीनां कर्मणिच्छन्दांसि विशेषरूपेण साहाय्यकारीणि भवन्ति, तस्मादेव काव्यशब्दस्य छन्दोबद्धरचनायां पर्यायार्थताप्रतीतिरिति तद्विदः।

काव्यरूपेषु चित्तवृत्तिस्तद्विधानं चेति द्वे तत्त्वे विचारणीये भवतः। कवेश्चित्तवृत्तेर्विषयानुरूपतां प्राप्तायामेवाभिव्यक्तेः पन्था अपावृतो भवति पाठकश्च तेनैव माध्यमेन कवेर्जीवनं प्रति सिद्धान्तां दृष्टिकोणानामध्ययनं कर्तुं पारयति। मनस्तत्त्ववेत्तृभिरपि मनोवृत्तीनामासामध्ययनानन्तरमेव चित्तवृत्तीनां प्रकारद्वयी सूचिता। तत्र प्रथमाऽन्तर्मुखी द्वितीया च बहिर्मुखी। अन्तर्मुख्या चित्तवृत्त्या कविर्बाह्यसंसाराद् वृत्तीर्निवृत्यान्तरिकजगत् प्रति समुन्मुखतां दधानोऽभिव्यक्तिं करोति। बहिर्मुख्या चेतोवृत्त्या च सांसारिकान् विचारान् पुरस्कुर्वन् वस्तुवर्णनप्रधानां रचनां जनयति। अथ च विधानतत्त्वेऽनुभूतीनां प्रेषणं काव्यरूपेण कथं करोतीत्यायाति। तत्र कवेर्मनसि पुरा रूपकल्पना समुद्भवति सैव च योग्यभाषाच्छन्दःशैलीप्रभृतीनामाश्रयेण स्फुरिता भवतीति सिद्ध एव राद्धान्तः। एवं विधाने शब्दानां ध्वनिः, छन्दसां सङ्गीतं लयानां योगश्च परमावश्यकतत्त्वरूपतां प्रतिपद्यन्ते। रूपभेदानां च कारणं—'सामाजिकी व्यवस्था, जीवनस्य लक्ष्यं, अनुभूतीनां सीमविस्तार आन्तरिक्यः प्रेरणाः सन्ति। एतेषु भेदेषु प्रथमं दृश्य-श्रव्यभागयोर्विभेदस्तदनन्तरं

च श्रव्यकाव्यस्य गद्य-पद्य-मिश्ररूपेण त्रयो भागा आकलिताः। पद्यानां च विभाजनं ततोऽपि बन्धदृष्ट्या प्रबन्ध-मुक्तकभेदाभ्यां निरूपितम्। प्रबन्धकाव्ये च महाकाव्य-खण्डकाव्ययोर्गणना जाता मुक्तकस्य च संग्रहदृष्ट्या कोषनीति-देशनाप्रधानेषु संग्रहेषु गणनाऽक्रियत।

### काव्यप्रसरे 'शास्त्रकाव्य'-परिणतिः

उपर्युक्तकाव्यप्रकारेभ्योऽतिरिक्ताः केचनान्येऽपि प्रकाराः काव्यस्य स्वीक्रियन्ते विद्वद्भिः। महाकविः क्षेमेन्द्रः स्वीये 'सुवृत्ततिलके' निम्न-पद्येन चतुष्प्रकारं काव्यप्रसरं पुरस्करोति। यथा हि—

शास्त्रं काव्यं शास्त्रकाव्यं, काव्यशास्त्रं च भेदतः।
चतुष्प्रकारः प्रसरः, सतां सारस्वतो मतः॥ इति।

अत्र विषये महाकवीराजशेखर एवमभिप्रैति—"प्रतिभाव्युत्पत्ति-माँश्च कविः कविरित्युच्यते। स च त्रिधा—शास्त्रकविः काव्यकवि-रुभयकविश्च। 'तेषामुत्तरोत्तरो गरीयानिति' श्यामदेवः। नेति यायावरीयः।" इति सूचयित्वा च—'तत्र त्रिधा शास्त्रकविः। यः शास्त्रं विधत्ते, यश्च शास्त्रे काव्यं संविधत्ते, योऽपि काव्ये शास्त्रार्थं निधत्ते।"[१] इति सूचनेन शास्त्रकवेस्त्रिधात्वं दर्शयति। एवं शास्त्रकवेः कर्म शास्त्रकाव्यमिति व्युत्पादयितुं शक्यते शास्त्रकाव्यस्य च द्वितीये तृतीये वा शास्त्रकविप्रकारेऽन्तर्भावोऽपि भवितुमर्हति। परं शास्त्रकाव्ये कविः 'काव्ये शास्त्रं संनिधत्ते' तस्मात् सोऽयं चतुर्थोऽपि प्रकारः शास्त्र-कवेः स्वीकृतश्चेत् सारल्यमापतेत्।

उत्तरोत्तरं काव्यप्रकारान् विशदयद्भिर्विपश्चिद्भिस्तु—

१—संख्याश्रितानि-अष्टकशतकादीनि, २—वर्णमाला-मातृकाश्रितानि-शालिभद्रमातृका—संवेगमातृका-ककारादि वर्णसूचकानि, ३—वृत्ताश्रितानि-छन्दसामाधारेणैव विभक्तानि, ४—रागाश्रितानि—सङ्गीतप्रधानगीत-गोविन्द-गीतगौरीपतिप्रभृतीनि, ५—ऋतूत्सवमूलकानि—ऋतुसंहार-विजयोत्सववर्णनपराणि च, ६—पूजा-धर्माश्रितानि—स्तोत्रादीनि, ७—लोकाश्रितानि—प्रहेलिका-व्यङ्ग्योक्ति रूपाणि, ८—शास्त्राश्रितानि—छन्दोऽलङ्कार व्याकरणादिशास्त्रसूचकानि चेति कतिपये प्रकारा निदर्शिताः। इत्थं शास्त्रकाव्यस्य परिणतिः सर्वथा सामयिकीति नात्र शङ्कावकाशः।

---

१—प्रथमाधिकरणस्य पञ्चमेऽध्याये काव्यमीमांसायाम्।

## शास्त्रकाव्यानामपि बहुविधत्वम्

यथा हि पूर्वमुक्तं शास्त्रकाव्यस्य लक्षणं—काव्ये शास्त्रसमावेशो भवतीति—तदनुसारं शास्त्राणां बहुविधत्वात् तद्गतकाव्यानां बाहुल्यमपि समायातमेव। तथाहि प्रामुख्येन व्याकरणच्छन्दोज्योतिषालङ्कारायुर्वेद-नियमोदाहरणप्रदर्शकानि काव्यानि शास्त्रकाव्यपरिधौ गणनीयानि भवन्ति। अथ च प्रतिभातारतम्येन कविः स्वीयान् मनोभावान् कथाविशेषेण, उपदेशद्वारा, उदाहरणद्वारा, प्रश्नपूर्वकं, लक्षणोदाहरणाभ्यां, प्रहेलिकादि-चित्रपद्धत्या वा तत्तच्छास्त्रगतविषयान् स्मारयन् काव्यं विरचयति। इयमेव शैली द्व्याश्रयशैली निगद्यते यस्यामेकतो नायकनायिकादिपात्र-माध्यमेन वर्णनीयविषयं पुरस्करोति, द्वितीयतश्चात्मन ईप्सितं शास्त्रं विवृणोति। ग्रन्थगौरवमभिलक्ष्य कतिपयेषु काव्येषु व्याकरणशास्त्र-वर्णनानन्तरं साहित्यशास्त्रस्यान्यान्यपि उदाहरणानि प्रदर्शितानि सन्ति।

अपरतश्च स्तुतिसाहित्ये शास्त्रचातुर्यं व्यञ्जयद्भिरनेकाः शास्त्रकल्पनाः स्तुतिकाव्ये स्फोरिताः। क्वापि मुक्तकैरेव शास्त्रकाव्यत्वं साधितम्। शब्दालङ्कारपरिधौ प्रायो विभक्तिमुद्रा-क्रियामुद्राभ्यामस्य विशेषः परिपाको दृश्यते।

## शास्त्रकाव्यस्य विकासवीथी

अस्य काव्यस्य विकासपरम्पराया विचारे सर्वतः प्रथमं वेद एवास्य बीजप्राप्तिर्भवति। तत्र हि 'चत्वारि शृङ्गा त्रयोऽस्य पादाः, इत्यादि-मन्त्रद्वारा व्याकरणस्य महिमा वर्णित इति भाष्यकाराः सूचयन्ति। शब्द-ब्रह्मणः स्तुतिरूपमस्यार्थं विवेचयन्तो भाष्यकाराः—नामाख्यातोपसर्ग-निपातरूपाणि चत्वारि शृङ्गाणि, भूत-भविष्यद्-वर्तमानेति त्रिकाल-रूपास्त्रयः पादाः, शब्दार्थौ शिरसी तथा सप्तविभक्तयः सप्तहस्ताः सन्ति। अयं च वृषभः —उरः-कण्ठ-शिरस्सु त्रिषु स्थानेषु बद्ध इति स्पष्टयन्ति। एवमेव भरतस्य नाट्यशास्त्रे साहित्यशास्त्ररूपमर्थं विभिन्नरूपेण विभावित-माचार्यैः। सायणादिभिस्त्वस्यार्थो यज्ञाग्निदैवतरूपः सूर्यदैवतरूपः कृत एव। सायणभाष्ये—४।५८।३

एवं वयं पश्यामो यद्वैदिककालादेव शास्त्रकाव्यस्य सूत्रपातोऽभवत्। पुराणेषु बहुत्र व्याकरणस्य चर्चायां सत्यां तस्य निर्देशः पद्यैरेव प्रदत्तः। अग्निपुराणस्य ३४८ अध्यायादारभ्य ३६७ अध्यायपर्यन्तं व्याकरणस्य

तथा कोषस्य विस्तृतं वर्णनमत्र निदर्शनं विद्यते। एतत्समकालमेव नन्दिकेश्वरस्य माहेश्वरसूत्रपराणि पद्यानि निर्मितानि भवेयुर्यस्योल्लेखः 'काशिका'यामायाति। पद्यं च तत्रेदमुदाहृतम्—

श्रोत्रत्वङ्नयनघ्राणजिह्वाधीन्द्रियपञ्चकम्।
सर्वेषामपि जन्तूनामीरितं 'जबगडदश्' ॥

अस्याः पद्धतेः प्रथमं काव्यं श्रीभट्टिकवेः 'रावणवधकाव्यं' यद् 'भट्टिकाव्य'-नाम्नैव विख्यातं विद्यते। अस्य कालः षष्ठ-सप्तमशतक इति प्राग्वृत्तविदः। अस्य काव्यस्य रचनायां कविना न केवलं व्याकरणस्यैव सम्पूर्णा नियमा गुम्फिता अपि तु शब्दार्थोभयालङ्काराणामपि भूयान् समावेशः कृतः। एतदनन्तरं दशमशताब्द्यां हलायुधस्य 'कविरहस्य' मायाति। यस्मिन् व्याकरणोदाहरणानि धातूनां विविधप्रयोगपुरस्सरं ग्रथितानि। अस्या एव परम्परायाः पालनं मुक्तकरूपेण यथावकाशं तु महाकविकालिदास—( प्र० शती ) भारवि-हर्ष-माघादिभिः स्वे स्वे काव्ये कृतमेव। यथा हि—रघुवंशे कालिदासः—स हत्वा बालिनं वीरस्तत्पदे चिरकांक्षिते। धातोः स्थान इवादेशं, सुग्रीवं संन्यवेशयत् ॥ १२, ५८ ॥ किरातार्जुनीये भारविः—स भवस्य भवक्षयैकहेतोः, सितसप्तेश्च विधास्यतोः सहार्थम्। रिपुराप पराभवाय मध्यं, प्रकृतिप्रत्यययोरिवानुबन्धः ॥ १३, १९ ॥ नैषधीयचरिते च श्रीहर्षः—

क्रियेत चेत् साधुविभक्तिचिन्ता, व्यक्तिस्तदा सा प्रथमाभिधेया।
या स्वौजसां साधयितुं विलासैस्तावत् क्षमानामपदं बहु स्यात् ॥३-२३॥

एवं शिशुपालवधे माघकविरपि—

केवलं दधति कर्तृवाचिनः, प्रत्ययानिह न जातु कर्मणि।
धातवः सृजतिसंहृशास्तयः, स्तौतिरत्र विपरीतकारकः ॥ १४-६६ ॥

भोजप्रबन्धकाव्ये च—

'सर्वस्य द्वे' सुमतिकुमती सम्पदापत्तिहेतू,
'वृद्धो यूना' सह परिचयात् त्यज्यते कामिनीभिः।
'एको गोत्रे' प्रभवति पुमान् यः कुटुम्बं बिभर्ति,
'स्त्रीपुंवच्च' प्रभवति यदा तद्धि(गोत्रं) गेहं विनष्टम् ॥

अनया रीत्याऽज्ञातकर्तृणामपि प्रहेलिकामूलकानि, प्रश्नोत्तररूपाणि, विनोदपराण्युपदेशदायीनि च प्राप्यन्ते ।[१]

वराहमूल (बारामूला) कश्मीरस्थ डडूगांवनिवासी भीमभट्टो भूमभट्टो वा पुनरेकादशे शतके वैदिकवर्जानि पाणिनीयाष्टाध्यायीसूत्राण्युदाहरन् सप्तविंशतिसर्गात्मकं 'रावणार्जुनीयम्' 'अर्जुनरावणीयं' वा महाकाव्यं पुरस्करोति । कार्तवीर्यार्जुन-रावणयोर्युद्धवर्णनव्याजेन समस्तानां विधि-सूत्राणामुदाहरणान्यत्र क्रमशो निवेशितानि । 'इदुगोण्याः' सूत्रस्यो-दाहरणं यथा—

क्षेत्रभूमिः पञ्चगोणिरपि, शतगोणिरासीन्महाफला ।
तत्र पाति पार्थिवे, कृतवीर्यसूनौ कृतात्मनि ॥

३५ पद्यं प्रथमसर्गे ।

द्वादश्यां शत्यां जातः कलिकालसर्वज्ञविरुदमण्डितः श्रीहेमचन्द्रा-चार्यो द्व्याश्रयकाव्यनिर्माणाय प्रसिद्धः । कुमारपालचरिताभिधेऽस्य काव्ये स्वरचित शब्दानुशासन-बृहन्न्यासयोरुदाहरणानि ग्रथितुं काव्यादौ स्वसाधितप्रयोगानां व्यवहृतये च प्रयस्तम् । 'अथप्राकृतम्' इति सूत्रा-दारभ्य प्राकृतव्याकरणस्यापि सूत्रक्रमन्यस्तमूलोदाहरण-व्यावृत्त्युदा-हरण-प्रस्तावायातमतान्तरोदाहरणप्रतिपादनं कृतमस्ति । एवं हेमचन्द्रा-चार्यः शास्त्रकाव्यपद्धतौ नवीनरीतिप्रवर्तकः, यतो ह्यस्य काव्ये संस्कृत-व्याकरणमन्तरा प्राकृतव्याकरणं व्यावृत्ति-मतान्तरोदाहरणसहितमपि

---

१. (क) नपुंसकमिति ज्ञात्वा, प्रियायै प्रेषितं मनः ।
तत्तु तत्रैव रमते, हताः पाणिनिना वयम् ॥

(ख) धीरः कीदृग् वचो ब्रूते ? को रोगी कश्च नास्तिकः ?
कीदृक् चन्द्रं नमस्यन्ति ? तत् सूत्रं पाणिनेर्वद ॥

(ग) आयातो वनमाली, गृहपतिरालि समायातः ।
स्मर सखि पाणिनि सूत्रं, 'विप्रतिषेधे परं कार्यम् ॥'

(घ) काचं मणिं काञ्चनमेकसूत्रे, ग्रथ्नासि बाले ! किमिदं विचित्रम् ।
विचारवान् पाणिनिरेकसूत्रे, श्वानं युवानं मघवानमाह ॥

'श्वयुवमघोनामतद्धिते' इति सूत्रम् ।

एवमेवोक्तिप्रत्युक्तौ—'कियन्मात्रं जलं विप्र ?', 'बाधति बाधते', कोनयति जगदशेषं॰ 'यमोगन्धने' सूत्रोत्तरं च द्रष्टव्यम्—शार्ङ्गधर पद्धतौ ।

प्रदर्शितम्, एतत् समकालमेव "सिरिचिह्न" काव्यमपि द्वादशसर्गात्मकं कृष्णलीलाशुककविना निर्मितम्। अस्मिन् प्रबन्धकाव्ये अष्टौ सर्गाः कविना, चत्वारश्च तच्छिष्येण दुर्गाप्रसादनाम्ना रचिताः। कृष्णलीलाया वर्णनेन साकमेवात्र प्राकृतव्याकरणोदाहरणयोजना विहिता। सेयं परम्परा प्रवहन्ती पञ्चदशशतकान्तं यथातथमुपेतैव।

व्याकरणस्य जटिला नियमा यथा शास्त्रकाव्येषु प्रस्फोरितास्तथैव ज्योतिषशास्त्रस्य गणित-प्रक्रिया अपि 'लीलावती' प्रभृतिषु ग्रन्थेषु, आयुर्वेदशास्त्रस्य 'वैद्यजीवन' (लोलम्बिराजकवेः) प्रभृतिषु काव्येषु विकासमाहिताः। नैतावदेव,विज्ञानस्यापि शास्त्रीयं ज्ञानं काव्येषु न्यस्तम्। यथा हि वैदिक—'श्रीसूक्त' स्य मन्त्रेषु सुवर्णसिद्धिप्रकारा वर्णिता इति व्याख्यातारः प्रथयन्ति तथैव जैनसूत्रग्रन्थ 'दशवैकालिक' सूत्रस्य प्रथमा गाथा तथा पादलिप्तसूरेरेकं 'वीरस्तुति'नामकं प्राकृतस्तवनं सुवर्णसाधनोपदेशकमिति प्रसिद्धम्।[१] यन्त्रमन्त्रतन्त्र-भेषजगर्भाणि स्तुतिकाव्यानि तु बहुभिर्जैनाचार्यैः रचितानि सन्ति तदग्रे प्रतिपाद्येत। छन्दःशास्त्रमधिकृत्य कतिपयानि श्रुतबोध-छन्दोमञ्जरीप्रभृतीनि काव्यानि विद्यन्ते येषु लक्षणोदाहरणसमन्वयपूर्वकं शृङ्गारभक्तिविषया निरूपिताः। सत्यप्येवं बाहुल्येन व्याकरणस्यैव निरूपणमाधिक्येन मिलति। आलङ्कारिकैः कैश्चित्तथात्वाय प्रयस्तम्, परं तत्र शैलीपरिवर्त्तनं तैराचरितम्। तैरेकनिष्ठया शैल्याऽलङ्कारलक्षणोदाहरणे एकस्मिन्नेव पद्ये निवेशिते यथा चन्द्रलोके जयदेवकविः। क्वचिच्च लक्षणानामुदाहरणानि स्वाभीप्सितवर्णनद्वारा प्रदर्शितानि, सेयं 'मिश्रशैली' रसगङ्गाधरादिषु। अग्निपुराणनाट्यशास्त्रयोश्च श्लोकशैली समादृता यत्र सकलमपि कथनं श्लोकद्वारैव कृतम्। क्वापि सूत्रशैल्या लक्षणसूचनं विहितमिति चतस्रः शैल्योऽलङ्काराणां शास्त्रकाव्यत्वसाधने प्रश्रिताः।

## षोडशशतकादूर्ध्वं शास्त्रकाव्यानि

सप्तदश शतकस्य तृतीये चरणे (१६७३ ई०) आपाजिभट्टसूनुना श्रीहरिभास्करेण 'पद्यामृत-तरङ्गिणी ग्रथिता। यस्यां बहूनां विदुषां

१. द्रष्टव्यम्—'स्तुतिचतुर्विंशतिकाया' भूमिकास्थटिप्पणे। आगमोदय-समितिग्रन्थसंख्या ५१ तमे।

हर्ष-लक्ष्मण-कस्यचिदित्यादिसूचितदिशा व्याकरणोदाहरणपराणि पद्यानि दत्तानि। यथा हि राजतरङ्गे—

'रोरी' त्येतदसिद्धञ्चेत् सिद्धञ्चेद्वशि,'चेति किम्।
मनोरथः कथं सिद्ध्येद् रामचन्द्रकृपां विना ॥ ३ ॥

अस्ति चास्य कवेरेतदपि वैशिष्ट्यं यदत्र मीमांसासूत्र-योगसूत्र-स्मारकानि पद्यान्यप्युपायनीकृतानि।[1] अस्यामेव शत्यां विजयराजसूरेः शिष्येण दानविजयाभिधेन (१७१६ ई० निकटे प्रायः) गुर्जरप्रदेशस्य विख्यातशेखफत्तानामकवीरस्य पुत्रबेडमियानामकस्य शिक्षणायैकं 'शब्द-भूषण' नामकं पद्यात्मकं व्याकरणं विरचितमासीत्।[2] एतदनन्तरमनिश्चितकाला अपि पद्धतिनिर्वाहवशात् समकालिकाःश्रीवासुदेवविजयकाव्य-सुभद्राहरणकाव्य-कंसवधकाव्यकर्तारः स्मृतिपथमायान्ति। तत्र हि 'वासुदेव-विजय'-काव्यं सर्गत्रयात्मकं केरलस्थपुरुवनग्रामवासी महा-वैयाकरणो वासुदेवनामैव (?) रचितवान्।[3] समग्राऽप्यष्टाध्यायी कृतार्थतामत्र प्राप्तवती। प्रथमे सर्गे ७१, द्वितीये सर्गे ७२, तृतीये च सर्गे ७९ पद्यानि सन्ति। अस्य काव्यस्य व्याख्यापि 'पदचन्द्रिका'नाम्ना स्वयं लेखकेन निर्मिता। अत्र द्वितीये सर्गे स्त्रीप्रत्ययादयस्तृतीये च कृदन्तान्ताण्युदाहरणानि प्रदत्तानि। यथा हि—

सकुण्डपाय्यैर्विदिताग्निचित्यैश्चिन्वद्भिरग्नींश्च समूह्य मुख्यान्।
अध्येतृभिः सम्यगृचां चरूणां पचैः कुशाग्रीयविशालधीभिः ॥२१॥२॥

इति पद्येन 'क्रतौ कुण्डपाय्यसञ्चाय्यौ' 'चित्याग्निचित्ये च' इत्यनयोः सूत्रयोर्निपातविधिः सूचितः। अस्य काव्यस्य निर्माणानन्तरं नारायणभट्ट-कविना 'धातुकाव्यं' निर्मितम्। धातूनामुदाहरणकाव्यस्यास्य निर्मिति-कारणं स्वयं लेखकस्तत्रैव दर्शयन्नाह—

उदाहृतं पाणिनिसूत्रमण्डलं, प्राग्वासुदेवेन तदूर्ध्वतोऽपरः।
उदाहरत्यद्य वृकोदरोदितान्, धातून् क्रमेणैव हि माधवाश्रयात् ॥१॥

भीमसेनपठितधातुपाठस्य माधवीयधातुवृत्तिदिशा कविरत्र माधव-चिन्तनमेव सर्वस्वमिति मन्यमानः स्वं काव्यं सदोषमपि खेदाय न

---

१—कलकत्तातः श्रीचौधरिणा प्रकाशिता १६४६ वत्सरे।

२—जैनस्तोत्रसंदोहे—भाग २ प्रस्तावना पृ० १३५ पादटिप्पणे द्रष्टव्यम्।

३—उदाहृतं पाणिनिसूत्रमण्डलं प्राग्वासुदेवेनेति वर्णनात्। धातुकाव्ये।

मनुते । काव्यगतवर्ण्यविषयान् तत्रैव संसूच्य १९४४ संख्यकान् धातून् क्रमशः प्रथमे सर्गे ६२, ( ७४० धातून् ), द्वितीये सर्गे ८५ पद्यानि ( ६१७ धातून् ) तथा तृतीय सर्गे ७१ पद्यानि ( ५०७ धातून् ) ग्रथित्वा केवलैस्त्रिभिर्दिनैरेव काव्यं कृतमिति सूचयति तत्रैव कविः।[१] उदाहरणं चास्य यथा—

प्रघिण्य भूषाः परिघुण्य मालिकाः,
प्रघृण्य घोणापुट-घूर्णि-चन्दनम्।
पणाय्य रूपाः पनिताः कतीन्ययु
र्भामिन्य एवाक्षमयाः स्वकामुकान् ॥१-५७॥

अस्मिन् पद्ये क्रमशो—'घिणि-घुणि-घृणि-घुण-घूर्ण-पण-पन-भाम-क्षमूष्-कमु-धातूनां प्रयोगा निर्दिष्टाः। अत्रैव हि कविना धातुपाठे विहितानां धातुपाठीयानुबन्धानां ञि-टु-डु-प्रभृतीनां बलात् प्रत्ययविशेष-जन्यशब्दानामपि उदाहरणानि तथा गुम्फितानि यथा हि कृत्स्नान्यपि तत्र समावृतानि भवेयुः[२]। श्रीब्रह्मदत्ततनयः श्रीनारायणनामा कविः 'सुभद्राहरणं' नाम काव्यं जग्रन्थ। २० सर्गेषु काव्यस्यास्य पूरणं व्याकरणोदाहरणरूपेण कृतम्। कविकृतविवरणशालिन्यस्मिन् काव्ये शब्द-प्रयोगचातुरी चेदृशी—

द्विषां स्तम्बावनश्चम्वा स्तम्बघ्नमपि बर्हिषा।
अन्तर्घणादिदेशाङ्गं खड्गग्रहकिणाङ्कितम्॥ इति।[३]

प्रायोऽस्मिन् काल एव कलितं महाराजदेवीसिंहाज्ञावर्ति-पण्डितमोहन-भट्टस्यानन्दाङ्कविभूषिता कृतिः 'कंसवध-काव्य' मपि विंशतिसर्गात्मकं प्राप्यते। पदसमुच्चयमण्डितस्यास्य काव्यस्य निर्माणकारणं कविः—

---

१—कंसहिंसाप्रबन्धार्थो वीरभक्त्यादयो रसाः।
त्रिभिर्दिनैः कृतं कर्म त्रिभिः सर्गैश्च कथ्यते ॥१॥
अक्रूरयोगो यात्रादिचापच्छेदान्तचेष्टितम्।
मल्लोद्योगादिकं सान्तपर्यन्तं च त्र्यहे कृतम् ॥२॥
इत्याद्यारभ्य ६ संख्यक श्लोकपर्यन्तम्। धातुकाव्ये।

२—इदं काव्य 'काव्यमाला' या (बम्बई) दशमगुच्छके मुद्रितम्।

३—अड्यारलायब्रेरीस्थसूचीपत्रे MSS-F ६४/XXI-Q २८ सूचितम्।

शब्दशास्त्रमनधीत्य तत्फलं येऽधिगन्तुमलसाः समुत्सुकाः।
तन्निमित्तमिदमीदृशं मया, केशवस्य चरितं निबद्ध्यते॥

एवं निर्दिश्य भागवतीयां कथां कंसवधसम्बन्धिनीं प्रथितवान्। अत्र सन्धिसंग्रह-सुप्विभक्तिसंग्रह-कारकसंग्रह-समाससंग्रह-तद्धितसंग्रहप्रभृति-नामभिः सङ्कलनं विद्यते। यथा हि—

नः पुनीहि परयानुकम्पया पुंस्यते भृगुकुलैक-पुङ्गव!।
उग्रमप्यनघधर्मशासनं, स्वच्छमेव चरितं तथाखिलम्॥१-३॥

भट्टिकाव्यवदत्रापि साहित्यस्योपेक्षितं किन्तु प्रायः सर्वेष्वपि महाकाव्येषु परम्परया प्रयुज्यमानं शब्दालङ्कार-प्रधानं चित्रकाव्यं चित्रसर्ग-नाम्ना निर्मितम्। यस्मिन् द्व्यक्षर-त्र्यक्षरैकाक्षरातालव्यप्रतिलोमपाद-खड्ग-पद्म-चक्रबन्धादयो निर्मिताः। एवं व्याकरणेन सहैव साहित्य-शिक्षणमपि कवेरभिप्रेतम्।[1]

सप्तदशशतके यथा व्याकरणशिक्षादायकानि काव्यानि निर्मितानि तथैव साहित्यशिक्षाप्रधानान्यपि काव्यानि रचितानि। 'मन्दार-मरन्द-चम्पू'-कारः श्रीकृष्णशर्माऽत्र वैशिष्ट्यं भजते। अस्य ग्रन्थे रसालङ्कार-योरुदाहरणानि तथा गुम्फितानि यथाऽस्मै 'रसालङ्कार-विश्वकोष' रूपेण सम्मानं दीयते। एवं गद्यपद्यसमन्विते चम्पूकाव्ये शास्त्रकाव्यत्वसमा-वेशेन कविः श्रीकृष्णशर्मा प्राथम्यमधिगच्छति। एतत्समकाल एव श्रीकृष्णपरकालस्वामिनामलङ्कारविषयिणी सुमहती रचना विदुषा-माश्चर्याय कल्पते। 'अलङ्कार-मणिहार' नामके ग्रन्थे श्रीकृष्णपरकाल-स्वामिभिरुदाहरणानि श्रीविष्णुस्तुतिपराण्येव स्वरचितानि दत्तानि। येषां च्छन्द एकमेवाथ च प्रायः २४ शतमितानि पद्यान्यत्रोदाहृतानि। रचना चैतेषामतीव प्रसादगुणान्विता। यथा हि गवाक्षबन्धपद्यम्—

अमलं जगतां कारणमुदार-रत्नावभासितोरस्कम्।
महनीयं विनुमः फणिगिरिराजविहारि किन्नरोद्गेयम्॥२३७७॥[2]

---

१—रायलएशियाटिकसोसायटी-बम्बईस्थ हस्तलिखितग्रन्थसंग्रहे १६६३ तमसंख्यायां सुरक्षितम्।

२—मैसूरविश्वविद्यालयादयं ग्रन्थो मुद्रितः।

स्तुतिकाव्ये च कतिपयेऽज्ञातकालनामानो जैनमुनयो हैमव्याकरणो-दाहरणमयान् श्रीऋषभजिन-शान्तिजिन-नेमिजिनस्तवान् निर्मितवन्तः। यथा—तेषामनुक्रमेण पद्यानि—

परमात्मानमाद्यं तमर्हं (१-१-१) कारं स्थितं स्तुवे।
'सिद्धिः स्याद्वादात्' (१-१-२) येनासाधि लोकान्तसंस्थिता ॥१॥

शान्तिं शिवाय सर्वज्ञं मुद्यत्नाभ्यां जनाः! स्तुत।
अमीभिरिमकैर्देवैः (१-४-३) सदातिजरसैर्नतम् ॥१॥

यं श्रिता गुप्तयस्तिस्रः श्रीनेमिं नौमि तं गतीः।
चतस्रोऽपासितुं ज्ञानादिश्रियां तिसृणां गृहम् ॥१॥

एवं कलापव्याकरणसन्धिसूत्रगर्भितं त्रयोविंशतिपद्यप्रमाणं श्रीऋषभजिनस्तवनमन्यदपि प्राप्यते यस्यादिमं पद्यमिदम्—

सिद्धो वर्णसमाम्नायस्तव जिह्वे चिरन्तनः।
शत्रुञ्जयेऽत्र यल्लेभेऽनन्तसिद्धे यदास्पदम् ॥१॥

इत्थमेव सारस्वतव्याकरणसन्धिसूत्रसमन्वितया स्तुत्या श्रीपार्श्वचन्द्र-सूरिरपि स्तौति। यथा—

अइउऋऌसमानाः सन्ति लोका इदानी-
मनघसरलभूता, वक्रभावप्रभूताः।
कथमिह हि लभन्ते प्राभवं शुद्धमार्गे,
प्रचुरतरविशस्ते तेन तुच्छा नु चित्रम् ॥२॥

इमामेव शास्त्रकाव्यपद्धतिमवलम्ब्याष्टादशशतकारम्भे श्रीमानानन्द-रायमखी नाटकेषु पूर्वं 'प्रबोधचन्द्रोदयादिषु स्वीकृतां रीतिं पुनरपि निमिमीषुः स्वीये 'जीवानन्द' नामके नाटके आयुर्वेदविषयज्ञानसूचकं शास्त्रीयं विषयं प्रयोजितवान्। आयुर्वेदस्य विज्ञानेन सह शृंगारसंयोजनायाः प्रकारो लोलम्बिराजकविना 'वैद्यजीवने' प्रदर्शित एव।

ऊनविंश्यां शत्यां रामवर्ममहाराजचरित्रमाध्यमेन, केरलप्रदेशस्य वेवकं जनपदे व्याघ्रालयेशक्षेत्रनिकटे महाकवि परमेश्वरशिवद्विजेनाष्टसु सर्गेषु पाणिनेरष्टाध्याय्या उदाहरणात्मकं 'रामवर्ममहाराजचरित्रं' नामकं महाकाव्यं रचितवान्। यथा हि— सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणी-पदाजपदप्रोष्ठपदः इति सूत्रस्योदाहरणम्—

तदनु सुदिवे नाकं प्राप्ते नृपे निजमातुले,
व्यसनजलधौ निर्मग्नात्मा महीभृदनन्तरः।
सहजतनया किंचित्कालं पुनः सदयस्ततः,
त्वरितमुदगादुन्नेतुं तामनन्यसमाश्रयाम् ॥ ५-६५ ॥

इतः परं च योगीन्द्रनाथतर्कचूडामणेर्दशाननवधकाव्यं, म० म० दिवाकरकवेश्चतुर्दशसर्गात्मकं पाण्डवचरितकाव्यं, चिरञ्जीवभट्टाचार्यस्य विद्वन्मोदतरङ्गिणी, देवीप्रसादकविचक्रवर्तिनः प्रयोगश्लोककौमुदी, अन्येषां च पाणिनीय-प्रकाशः, व्याकरणपद्यचन्द्रिकाप्रभृतयो ग्रन्था आयान्ति। सोऽयं प्रयासो विंश्यां शत्यामपि नावरोधमाप्तवानिति महते विस्मयाय! यतो हि प्रायः सर्वोऽपि जन आत्मानं स्वतन्त्रं कर्तुकामः सर्वैरपि बन्धनैर्मुक्तं चिकीर्षुरस्ति। तत्र हि म० म० गङ्गानाथमहोदयस्य 'अलिविलासिसंलापकाव्यम्' आलङ्कारिकान् नियमान् शिक्षयति तथान्येषां शास्त्राणामपि वैदग्ध्यं काव्यमाध्यमेनोपायनीकुरुते। वैयाकरण-केसरि श्री लालचन्दमहाराजैः 'पद्यव्याकरणं' नाम भाषाभाष्यभूषितं काव्यं रचितं यत्र ३३८ पद्यैः संस्कृतव्याकरणं ७६ पद्यैश्च प्राकृतव्याकरणं पुरस्कृतम्। एवमेव धुरन्धरसूरिनामभिर्महाराजैर्हेमचन्द्रस्य शब्दानुशासनानुसारि-सन्धिविनोद-लक्षण-विलास-हैमसरस्वतीटीकानां निर्माणं कृतम्। महामहोपदेशकः श्री प्रभुदत्तशास्त्री च 'संस्कृतवाक् सौन्दर्यामृत' काव्येन व्याकरण वैशिष्ट्यं प्रदर्शितवान्।

एवमेषा शास्त्रकाव्यसरणिरपि विदुषां कृते नितरां तोषावहा समजायत। नैकास्तु तयोऽत्र कर्तृनामविरहिताः कालज्ञानरहिताश्च स्मृतिपथमायान्त्योऽपि न सूचिताः। इतिहासग्रन्थेषु तथाविधसाहित्यस्य खलासूचनाभावादपि न पार्यते स्पष्टरूपेणेदमित्थंकारेण। परमिदं त निश्चितमेवास्ति यत् संस्कृतज्ञेन लोकसौकर्याय सितशर्करासाधीयस्याः प्रवृत्तेः संरक्षणाय च कीदृश आर्षः पुरुषार्थ आचरितो यस्य महिमानं स्मृत्वापि विस्मयततिमनुभवामो वयम्। अस्याः परम्परायाः संरक्षणाय सम्प्राप्तसाहित्यस्य वास्तविकपरिचयाय च व्यवस्था विधेया न च तत्रोपेक्षा समाश्रयणीयेति तत्रभवन्तो विद्वांसः प्रार्थनीयाः सन्ति।

---

# संस्कृतसाहित्ये नवोन्मेषः

विश्वनाथ शास्त्री

दयानन्दैः तस्यानुयायिभिश्च सर्वेषु युगेषु युगप्रवृत्तिमधिकृत्य बहुशः संस्कृतसाहित्यं रचितम्। आधुनिके युगे दयानन्दस्वामी कंचिद् नवीनं पन्थानमदर्शयत्। संस्कृतसाहित्ये नवोन्मेषस्य अग्रणीः स एव स्वामी।

स्वामी दयानन्दो वेदोद्धारकरूपेण प्रसिद्धोऽस्ति। तेन वैदिके वाङ्मये सर्वा दिशाः प्रदर्शिताः। मध्ययुगे उव्वटाचार्यो, महीधराचार्यः सायणाचार्यश्च वेदभाष्यं कृतवन्तः। आधुनिके युगे केचिद् वैदेशिकाः विद्वांसः मैक्समूलर—विटनी—ग्रिफिथप्रभृतयो वेदभाष्यं कृतवन्तः। भारतीयानि भाष्याणि यज्ञप्रधानानि खल्वासन्। वैदेशिकानि च भाष्याणि इतिहासप्रधानानि, भाषाशास्त्रोपकारकाणि (मिथोलोजी-फिलोलोजीप्रधानानि वा) सन्ति। स्वामी दयानन्द एतेषां विदुषां मतं परित्यज्य नवां सरणीं प्रदर्शितवान्। तेन यौगिकीं शैलीमवलम्ब्य वेदानां भाष्यं कृतम्। स्वामी दयानन्द आह स्वरचितायां ऋग्वेदादिभाष्य-भूमिकायाम्,—

''सायणाचार्येण वेदानां परममर्थमविज्ञाय सर्वे वेदाः क्रियाकाण्ड-तत्पराः सन्तीत्युक्तम्। तदन्यथास्ति। कुतः, तेषां सर्वविद्यान्वितत्वात्। एवमेव महीधरेण वेदार्थदूषकं वेददीपाख्यं विवरणं कृतम्...यदि ह्यार्यदेश-वासिनां सायणमहीधरप्रभृतीनां व्याख्यास्वेतादृशी मिथ्यागतिरस्ति, तर्हि योरोपखण्डनिवासिनामेतदनुसारेण स्वदेशभाषया वेदार्थव्याख्याना-नामनर्थगतेस्तु का कथा।...वेदाः सर्वविद्याभिः पूर्णाः सन्ति नैव किंचित् तेषु मिथ्यात्वमस्ति।'

स्वामी दयानन्दः वेदेषु सर्वा विद्याः सन्तीति मन्यतेस्म। तेनोक्तं यद् वेदेषु राजप्रजाधर्मविषयः, गणितविद्याविषयः, नौविमानादिविषयः तार-विद्याविषयश्च सन्ति।

वेदानां पठने कस्य अधिकारो विद्यते इत्यस्मिन् विषये दयानन्देन महती क्रान्तिः कृता। पूर्वं तु विप्रा एव अधिकारिण आसन् परमद्यत्वे दयानन्दस्यैव प्रभावेण शूद्राः हरिजनाः यवनाः म्लेच्छाश्च सर्वे वेदान्

पठन्ति। एतादृशी क्रान्तिस्तु कस्मिन्नपि युगे न जाता। स्वामी दयानन्दः प्राह च ऋग्वेदादिभाष्यभूमिकायाम्—

"वेदादिशास्त्रपठने सर्वेषामधिकारोऽस्ति आहोस्विन्नेति? सर्वेषामस्ति वेदानामीश्वरोक्तत्वात्, सर्वमनुष्योपकारार्थत्वात् सत्यविद्याप्रकाशकत्वाच्च। यद् यद् हि खलु परमेश्वररचितं वस्त्वस्ति तत् तत् सर्वं सर्वार्थमस्ति इति विजानीमः।

द्वितीयं च परिवर्तनं स्वामिना दयानन्देन समाजसंस्कारविषयकं कृतम्। जात्युत्थानमधिकृत्य केनापि खल्वाचार्येण नाद्यपर्यन्तं किंचिल्लिखितम्। यवनानां मोहमदानुयायिनां भारताक्रमणात् प्रारभ्य हिन्दुजातिः दिनानुदिनं ह्रासं प्राप्ता प्रतिदिनं हिन्दवो यवनमतम् अवलम्बितवन्तः। तदनन्तरं ख्रिस्ता अत्रागताः। तेऽपि ख्रिस्तमतप्रचाराय अस्माकं देशे स्थाने स्थाने विद्यासंस्थानां चिकित्सालयानां च स्थापने प्रवृत्ताः। तदा हिन्दवः ख्रिस्तमतेऽनुरक्ताः संजाताः। परं कोऽपि भारतीय आर्यपंडितः यवनख्रिस्तमतयोः खण्डनं कर्तुं नालमासीत्। एतादृशे विनाशे उपस्थिते सति दयानन्दः भारतभूमौ उत्पन्नः। वेदाः स्वतः प्रमाणमन्यत् सर्वं परतः प्रमाणमिति घोषं कृत्वा यवनानां ख्रिस्तानां च कुरानबाइबलप्रभृतिग्रन्थानां समीक्षणं कृत्वा आर्यधर्मस्य जयमुदीरितवान्। तेन ऋषिणा कोटिशः पतनोन्मुखा हिन्दवः परमतेभ्यः रक्षिताः। नवदीक्षिताः यवनाः ख्रिस्ताश्च पुनरार्यमतं प्रापिताः। दयानन्दः "प्रायश्चित्तविधिं" "शुद्धि" नामानं वा आन्दोलनं सर्वत्र प्रचारितवान्। स्वामी सर्वत्र संस्कृतभाषायामेव अवैदिकसंप्रदायानां खण्डनं कृत्वा वैदिकधर्मं स्थापितवान्। तेन १८७४ ख्रिस्ताब्दपर्यन्तं केवलं संस्कृतभाषायामेव सर्वप्रकारको व्यवहारः कृतः। तेन अन्या कापि भाषा न व्यवहृता।

तृतीयं परिवर्तनं च तेन स्वामिना शृङ्गारप्रधानानां रचनानां ह्रा वीररसप्रधानानां चोपादानं कृतम्। तेन भारतीयसभ्यताः देशस्यभक्तिश्च प्रचारिताः। पंचमकारात्मकस्य तंत्रमार्गस्य वाममार्गस्य च तेन खण्डनं कृतम्। किंच श्रीकृष्णस्य भागवतादिपुराणेषु वर्णितं शृङ्गाररसमयं रूपं विहाय योगिरूपं राष्ट्रोन्नायकरूपं च प्रवर्तितम्। आङ्ग्लानां प्रशासने सति भारते सर्वे युवकाः भारतीयां सभ्यतां परित्यज्य पाश्चात्यसभ्यतां स्वीकृतवन्तः। स्वामी दयानन्दः "पुनः वेदमार्गं प्रति चलत" इति घोषं कृत्वा भारतीयां सभ्यतां पुनः स्थापितवान्।

दयानन्दः ऋग्वेदादिभाष्यभूमिकायामाह—यद् यत्किंचिद् भूगोल-मध्ये पुस्तकान्तरेषु हृदयान्तरेषु वा सत्यविद्याविज्ञानमभूत् भवति भवि-ष्यति च, तत् सर्वं वेदादेव प्रसृतमिति विज्ञेयम्।

इदं तु सम्यक् सिद्धमेवास्ति यद् दयानन्देन संस्कृतसाहित्ये नवोन्मेषः कृतः। वेदविषयमवलम्ब्य तेन महत् कार्यं कृतम्। वैदिकधर्मोद्धाराय तेन महान् प्रयत्नः कृतः। तेन नवीनानां मतानां सम्यक् समीक्षा कृता दयानन्दः सर्वान् धर्मशत्रून् राष्ट्रशत्रून् च तर्केण ताडयित्वा पुनः आर्य-धर्मम् आर्यजातिं च रक्षितवान्। ततश्चात्रत्या नागरिका नवोन्मेषं दृष्ट्वा जागरिताः स्वकर्तव्ये च प्रवृत्ता अभूवन्।

दयानन्दस्याधोलिखितं वाङ्मयं वर्तते :—

मौलिकाः ग्रन्थाः

(१) ऋग्वेदादिभाष्यभूमिका
(२) पञ्चमहायज्ञविधिः
(३) संस्कृतवाक्यप्रबोधः

वेदादिग्रन्थानां भाष्यम्

(४) ऋग्वेदभाष्यम् ( मण्डल ७ सूक्तं ६१ पर्यन्तम् )
(५) यजुर्वेदभाष्यम्
(६) अष्टाध्यायीभाष्यम्

दयानन्दकृतानां हिन्दीग्रन्थानां संस्कृतानुवादाः

(७) शंकरदेव पाठकः—सत्यार्थप्रकाशः
(८) विद्यानिधिशास्त्री—व्यवहारभानुः (पद्यानुवादः)

आलोचना प्रत्यालोचना च

(९) द्विजेन्द्रनाथशास्त्री—भूमिकाप्रकाशः

दयानन्दचरितानि

(१०) अखिलानन्दः—दयानन्ददिग्विजयमहाकाव्यम्
(११) दिलीपदत्तोपाध्यायः—मुनिचरितामृतम्
(१२) द्विजेन्द्रनाथशास्त्री—दयानन्दोदयः
(१३) मेधाव्रतः—दयानन्ददिग्विजयकाव्यम्

ऋषिः दयानन्दः केवलं पंडित एव, आचार्य एव पारिव्राडेव च

नासीत्। स तु देशस्य महान् नेताऽपि आसीत्। तेन वैदिकधर्मप्रचाराय "आर्यसमाज" नामकं संघटनमपि स्थापितम्। आर्यसमाजसिद्धान्तस्य प्रचारकैः अथवा दयानन्दस्य भक्तैः संस्कृतसाहित्ये किं कृतमित्यपि अधोलिख्यते :—

(१) स्वामी विश्वेश्वरानन्दः स्वामीनित्यानन्दश्चेति महानुभावैः (वेदपदानामकारादिवर्णक्रमानुक्रमणिका) संपादिता।

(२) शिवशंकरशर्मा काव्यतीर्थः—ऋग्वेदस्य (अष्टममण्डलस्य आंशिकरूपेण) संस्कृतभाष्यम्।

(३) तुलसीरामस्वामी—सामवेदभाष्यम् (संस्कृते)

(४) महामहोपाध्याय आर्यमुनिः—ऋग्वेदभाष्यम् (अष्टममण्डलस्य)

(५) क्षेमकरणदासत्रिवेणी—अथर्ववेदस्य संस्कृतभाष्यम्

(६) द्विजेन्द्रनाथशास्त्री—भूमिकाप्रकाशः

(७) ब्रह्मदत्तजिज्ञासुः—यजुर्वेदभाष्यविवरणम्

दिवंगताः लौकिकाः लेखकाः

(१) द्विजेन्द्रनाथशास्त्री

(क) दयानन्दोदयः

(ख) स्वराज्यविजयः

(ग) संस्कृतसाहित्यविमर्शः

(२) मेधाव्रतः

(क) ईशोपनिषत्काव्यम्

(ख) कुमुदिनीचन्द्रः (उपन्यासः)

(ग) नारायणस्वामिचरितम्

(घ) प्रकृतिसौन्दर्यम्

(ङ) ब्रह्मचर्यमहत्त्वम्

(च) ब्रह्मचर्यशतकम्

(छ) महर्षिविरजानन्दचरितम्

जीविताः लौकिकाः लेखकाः

(३) गङ्गाप्रसादोपाध्यायः

(क) आर्यस्मृतिः

(ख) आर्योदयकाव्यम्

(४) धर्मदेवः—महापुरुषकीर्तनम्

(५) ब्रह्ममुनिः—वेदान्तदर्शनस्य संस्कृतभाष्यम्

(६) सत्यदेववसिष्ठः—सत्याग्रहनीतिकाव्यम्

पत्रिकासाहित्यम्

(१) गुरुकुलपत्रिका (गुरुकुलकाङ्गड़ी हरिद्वारतः प्रकाश्यते)

(२) भारतोदयः

---

# आधुनिकसंस्कृत-साहित्याध्ययनम्

प्रो० चिन्ताहरण—चक्रवर्ती

आधुनिकसंस्कृतसाहित्ये विभिन्नप्रान्तेषु किं किं कृतमित्यस्माभिर्विचारणीयम्। आधुनिकैः संस्कृतग्रन्था बहवः प्राणीयन्त किं तु विषयमिमं संस्कृतरसिका अपि न विशेषेण जानन्ति, प्राचीना ग्रन्थाः सर्वैरधीयन्ते, नवीनास्तु न। केनचित् कलिकातास्थेन प्राध्यापकेन मुग्धबोधस्य व्याख्या प्रणीता, किं तु तस्याः टीकायाः पाठको नासीत्। तदा नितरां क्षुण्णेन तेन टीकाकारेण वृत्तपत्रेषु एतद्ग्रन्थस्य प्रतिलिपिकर्तृभ्यः प्रतिव्यक्ति रूप्यकपंचकं दास्यामीति विज्ञापनं प्रदत्तम्। अधुनापि सन्ति कवयः, परं न तेषां पाठकाः। आधुनिकेनान्यतमेन कविना रामलिङ्गशास्त्रिमहोदयेन संस्कृतलेखकानां स्थितिर्वर्णिता—संस्कृतविषये जना बहु वदन्ति, इयं भाषा रक्षितव्या व्यवहर्तव्या चेति। किंतु प्राप्ते काले न ते किमपि कुर्वन्ति। समालोचकैः केवलं साधुवादा वितीर्यन्ते। मुख्यतो निबन्धलेखका एव तेषां पाठकाः नेतरे इति।

कीथ महोदयेन संस्कृतसाहित्येतिहासे त्रयोदशशतकपर्यन्तं विरचिता ग्रन्थाः समालोचिता नाधुनिकाः। Indian PEN- पक्षतः प्रचारिते ग्रन्थे आचार्यदाण्डेकरेण कश्चिन्निबन्धः प्रकाशितः तत्राधुनिकसंस्कृतग्रन्थानां ग्रन्थकाराणां च विवरणं दत्तम्।

कृष्णमाचार्यकृते संस्कृतसाहित्येतिहासे नवीनकाव्यनाटकादीनां तत्कर्तृणां च नामानि सन्ति। मयापि कतिभ्यश्चिद् वर्षेभ्यः प्राक् गङ्गानाथझारिसर्च-इनष्टिट्यूट्पत्रिकायामाधुनिकभारतवर्षस्य साहित्यपरम्परायां संस्कृतस्य स्थानमित्याख्यः कश्चन निबन्धो लिखितः। दाण्डेकरकृष्णाचार्याभ्यां केवलं दृश्यश्रव्यकाव्यग्रन्था एव नामग्राहमुल्लिखिताः, मया पुनर्धर्मविज्ञानव्यवहारशास्त्रग्रन्थानामपि परिचयो दत्तः। वे० राघवन् महोदयेनापि विषयेऽस्मिन् कतिपयनिबन्धाः प्रकाशिताः। महत्त्वपूर्णं तथ्यमिदं न विस्मरणीयं यत् प्रान्तीयभाषाभिः सममेव संस्कृतेऽपि नवीनविषयानवलम्ब्य ग्रन्थविरचनं जातं विगते शतके। संस्कृतविद्भिरव-

लम्बितानां नवीनमार्गाणां विवरणं मया वङ्गीय-एसियाटिकसोसाइटी-पत्रिकायां १६२८ तमे खृष्टसंवत्सरे प्रकाशितम्।

आधुनिकसंस्कृतग्रन्थाः सम्यक्तया न पठ्यन्ते इति महद्दुःखस्थानम्। येषां ग्रन्था न मुद्रिताः त एव भाग्यवन्तः। अमुद्रिता ग्रन्थाः मातृकाग्रन्थशालासु बहुशः संगृहीताः, संगृह्यन्ते च। एकोनविंशतितमशतकमध्यभागे आधुनिकविषयाणां ज्ञानप्रचाराय नैके ग्रन्था विलिखिता, मुद्रिताः, काशिस्थराजकीयसंस्कृतपाठशालायां पाठ्यत्वेन निर्धारिताश्चासन्। ते तु ग्रन्था वृटिश् म्युजियमित्याख्ये ग्रन्थालये सुरक्षिताः सन्ति। काश्यां पुनस्तेषां नामान्यपि न ज्ञायन्ते।

१८३५ खृष्टाब्दे एडम महाशयस्य पूर्वभारतीयतात्कालिकशिक्षाविवरणं प्रकाशितम्। तत्र बहूनां पण्डितानां तद्ग्रन्थानां च नामान्युल्लिखितानि सन्ति। अनुसन्धाने कृते तेषु केचन ग्रन्था उपलप्स्यन्त इति संभाव्यते।

केपलारकृतं यवनशतकाख्यं नवीनखण्डकाव्यं इण्डियान् एण्टिक्वारीपत्रे प्रकाशितं वर्तते। तस्य पुनः प्रकाशनमपेक्षितम्।

अन्येऽप्यनेके नवीना ग्रन्थाः सन्ति येषां पूर्णाङ्गालोचनं कर्तव्यमिति मन्ये।

महदिदं हर्षस्थानं यत् सागरविश्वविद्यालये नवीनसंस्कृतसाहित्यमधिकृत्य शोधकार्यं प्रचलति। एवमन्यत्रापि नवीनसंस्कृतसाहित्यस्य प्रतिष्ठायै उपेक्षाबुद्धिं विहाय विद्वद्भिस्तत्र मनोयोगो विधेय इति॥

श्रीमता विश्वनाथभट्टाचार्येण नव्यसंस्कृतशोधकर्मणि सागर विश्वविद्यालयस्य ये प्रयत्ना वर्णिताः, ते नितरां प्रशस्याः। वङ्गेषु प्राथमिकपरीक्षायामाधुनिकलेखकानां लेखाः पाठ्यपुस्तकेऽन्तर्भूताः किन्तु ते प्रायेण न पाठ्यन्ते। संस्कृतशिक्षापरिषद्गृहीतायां संस्कृतपरीक्षायां केचनाधुनिकाः काव्यनाटकग्रन्थाः पाठ्यतया निर्दिष्टा जायन्ते, किन्तु तदध्ययने न दृश्यते परीक्षार्थिनां मनोयोगः।

आधुनिकसंस्कृतसाहित्यस्य यथा आलोचनं क्रियते, तथैव तस्य भाषापि सम्यगालोचनीया। विभिन्नप्रान्तीयलेखकानां संस्कृतरचनासु तत्तत्प्रान्तीयभाषाप्रभावो विराजते। वङ्गेषु चेष्टाशब्दः प्रयत्नार्थः संस्कृतभाषायामपि प्रचलति। महाराष्ट्रेषु पुनश्चेष्टाशब्द उपहासार्थः, कुत्रचित् संस्कृतनाटके मानवतीं नायिकां प्रति नायक

आह—देवि, चण्डीभूतासीति। तत्र देव्याः प्रत्युत्तरम्—तेन पठ मामिति। अत्र सप्तशतीबोधकश्चण्डीशब्दः प्राधान्येन वङ्गेष्वेव प्रसिद्धः। तथैव अतएवार्थकः सुतरांशब्दः वङ्गभाषागोचरः संस्कृतेऽपि प्रयुक्तः प्रान्तान्तरे भ्रममुत्पादयति। सुविधा इति तु प्रान्तीयः शब्दः। ततः सञ्जातं सौविध्यमिति संस्कृते समागतः शब्दः। सरकार इत्यर्थे सर्वकार इति व्यवह्रियते। एवं विभिन्नप्रान्तीयानामपि भाषाणां प्रभावः संस्कृतभाषायां समायातः। नैतद् दोषानुसन्धित्सया प्रतिपाद्यते, किं तु सम्यगालोचनार्थमिति विज्ञेयम्।

संस्कृतसाहित्यस्य प्रचारो यथा भवेत् यथा च तत्र साधारणजनस्यानुरागः संजायेत तथा प्रयत्नः कार्यः। इदानीं मिथिलायाम् आधुनिके काले संस्कृतशिक्षाया उपयोगित्वमधिकृत्य परिसंवाद आयोजितः।

केवलं शोधपत्रवाचनेन साफल्यं न भवितुमर्हति। अस्माकं जीवने संस्कृतस्य प्रभावः सर्वथा विशदीकरणीयः। जनजीवने, साहित्ये भाषायां च वर्तमानः संस्कृतस्य प्रभावो यदि सम्यक् प्रदर्शितो भवति, तर्हि तदनुशीलने भविष्यत्येव जनानामाग्रहः।

कलिकाताविश्वविद्यालये आनर्सपरीक्षायां वेदमन्त्राः पाठ्यत्वेन व्यवस्थिताः। अतिदुरूहः स पाठ्यक्रमः। नितरामपरिचितेषु श्रौतयज्ञेषु मन्त्राः कथं विनियुज्यन्ते स्मेति तत्र प्राधान्येनालोच्यते। प्रचलत्सु धर्मकृत्येषु तेषां व्यवहारो न प्रदर्श्यते। तथा च वेदपाठे छात्राणामरुचिर्जायते। साहित्याध्यापनेऽपि व्याकरणादिविषयाणां चर्चाबाहुल्ये छात्राणामाग्रहो विलयं याति। साहित्यपाठने व्याकरणं सर्वथोपेक्षणीयमिति नास्माकमभीष्टम्। किं तु यथा व्याकरणचर्चाधिक्येन छात्राणां साहित्याध्ययने विरक्तिर्न जायते, तथा करणीयम्। अन्यथा मूलच्छेदः स्यात्।

अभिज्ञानशाकुन्तलस्य प्रथमश्लोके शब्दगुणमाकाशमिति न्यायसिद्धान्तस्य सादृश्यदर्शनाद् यदि कालिदासस्य न्यायशास्त्रज्ञानं कीदृगासीदिति पृच्छयते तर्हि तन्नितरां वैरस्यापादकं स्यात्। काव्यसमालोचने यदि दर्शनमानीयते, तर्हि काव्यरसास्वादो न भवति।

उद्भटश्लोकाः कौतुककरकथादयोऽन्ये च विषया आदौ प्राथमिकशिक्षायामन्तर्निविष्टा आसन्। तेषां मनोहारित्वं निःसन्दिग्धमासीत्। 'का शीतलवाहिनी गङ्गा', 'भागीरथीतीरसमाश्रितानाम्', इत्यादीनामुद्भट

